

श्री

# अथअष्टावक्रगीता॰ प्रारभ्यते ॥

जनकउवाच ॥ कथंज्ञानमवाप्नोतिकथंमुक्तिर्भविष्यति ॥
वैराग्यंचकथंप्राप्तमेतत्त्वंब्रूहिमेप्रभो ॥ १ ॥ अष्टावक्रउवा
च ॥ मुक्तिमिच्छसिचेत्तातविषयान्विषवत्त्यज ॥ क्षमा
र्जवदयातोषसत्यंपीयूषवद्भज ॥ १ ॥ ॥ ॥

श्रीवासुदेवायनमः ॥ सच्चिदानंदमद्वैतंसर्वाधिष्ठानमुत्तमं ॥ नत्वाष्टावक्रसूक्तस्यदीपिकातन्यतेपरा ॥ १ ॥ इहखलुज्ञानविज्ञानसंपन्नःपरमकारुणिकोऽष्टावक्रमुनिःमुक्तिकामनयासमुपेतंकंचिच्छिष्यंशमदमाद्यधिकारस्वीकारोपदेशपूर्वकमात्मतत्वमुपदिशति मुक्तिमिच्छसीति ॥ तातेतिसानुग्रहसंबोधने । हेशिष्य चेत्त्वंमुक्तिंसर्वानर्थनिवृत्तिपरमानंदावाप्तिरूपांमुक्तिमिच्छसिचेत्तर्हिविषयान्विषवत्त्यज । यथाविषंअनर्थहेतुत्वात्त्यज्यतेतथाविषयान्देहादीननर्थहेतुभूतांस्त्यज । तत्राहंममेत्यध्यासादासक्तिंमाकार्षीरित्यर्थः अनेनवाह्यपदार्थानुषंगत्यागोपदेशेनवाह्येंद्रियनिग्रहरूपदमांगीकारउपदिष्टः । अथांतःकरणनिग्रहरूपशमाधिकारमुपदिशति । क्षमेति । क्षमानामसर्वसहनंसर्वाधिष्ठानत्वमात्मधर्मः । आर्जवंनाम अविद्यारूपकुहकसंबंधाभावःसोप्यात्मधर्मः दयानामनिरुपाधिकंसर्वहितानुबंधित्वंसोप्यात्मधर्मः । तोषोनामात्मसुखंतदप्यात्मस्वरूपं । सत्यंनामकालत्रयाबाध्यंस्वरूपंतदप्यात्मैव एवंविधमात्मस्वरूपंपीयूषवद्भजक्षमादिकंयथापीयूषंअर्थहेतुत्वात्सेव्यस्तेत्यर्थः शमदमादिसाधनचतुष्टयसंपन्नमधिकारिणीं शिष्यंप्रतिभगवानष्टावक्रोमुनिर्मुक्तिमुपदिशति ॥ १ ॥

नपृथ्वीनजलंनाग्निर्नवायुर्द्यौर्नवाभवान् ॥
एषांसाक्षिणमात्मानंचिद्रूपंविद्धिमुक्तये ॥ २ ॥

नतुपांचभौतिकोदेहएवात्मातथाचभूतानांतद्धर्माणांचसंयोगोनसं

भावितः नहि पृथिव्यादीनां स्वभावभूतो गंधादिः कालत्रयेपि त्यज्यत इत्याशंक्य पृथिव्यादिस्वरूपस्त्वं न भवसीत्याह। न पृथ्वीति। हे शिष्य पृथिव्यप्तेजोवाय्वाकाशतद्धर्मरूपस्त्वं न भवसि ततस्त्वमनात्मधर्मान् विषयांस्त्यजेत्यर्थः। नन्वहं गौरः स्थूलः कृशो ह्रस्व इत्यादिप्रतीतेः पांचभौतिको देह एवात्मेत्यत आह। एषां देहादीनां साक्षिणमेवात्मानं विद्धि। साक्षात् कुरु। तथा च देहादेः साक्षी आत्म देहादिभ्यो भिन्नः। यथा घटद्रष्टा घटाद्भिन्न इत्यर्थः॥ नैयायिकाभिमतमात्मानं निराकरोति॥ चिद्रूपमिति। आत्मज्ञानस्य फलमाह॥ मुक्तय इति ॥ २ ॥

यदि देहं पृथक्कृत्य चिति विश्राम्य तिष्ठसि॥
अधुनैव सुखी शांतो बंधमुक्तो भविष्यसि॥ ३ ॥

आत्यंतिकी दुःखनिवृत्तिर्मुक्तिरिति नैयायिकाः दुःखप्रागभावपरिपालनं मुक्तिरिति प्रभाकराः। आत्महानिर्मुक्तिरिति बौद्धा इत्यादिमतानि निराकुर्वन्नेवात्मज्ञानाज्जीवन्मुक्तिदशामाह यदीति। हे शिष्य यदि त्वं देहं पृथक्कृत्य देहादिभ्यो विलक्षणं विविच्य चिति विश्राम्य चिदेकाग्रो भूत्वा तिष्ठसि। तर्हि त्वं अधुनैवेदानीं जीवनदशायामेव सुखी प्राप्तपरमानंद अत एव शांतः सुप्रसन्नमनाः बंधमुक्तः कर्तृत्वभोक्तृत्वप्रमुखानर्थरहितो भविष्यसि इत्यर्थः॥ ३॥

न त्वं विप्रादिको वर्णो नाश्रमी नाक्षगोचरः ॥
असंगोसि निराकारो विश्वसाक्षी सुखी भव॥ ४ ॥

ननु वर्णाश्रमप्रयुक्तानि कर्माणि विहाय चिति विश्राम्यावस्थानं कथं मुक्तिरित्याशंक्यात्मा वर्णाश्रमविलक्षण इत्याह न त्वमिति। त्वं वर्णाश्रमविलक्षण इत्यर्थः नन्वहं ब्राह्मण इत्यादिचाक्षुषप्रत्यक्षबलादात्मैव वर्णाश्रमीत्याशंक्याह॥ नाक्षगोचर इति॥ अयं ब्राह्मण इत्यादिप्रत्ययास्तु देहगोचरा एव न त्वात्मगोचरास्त्वमिंद्रियकज्ञानागोचरत्वादित्यर्थः। तर्हि कीदृशोहमित्याशंक्यात्मानं निरूपयति॥ असंग इति। असंगः सर्वोपाधिसंगरहितः॥ निराकारः विश्वसाक्षी त्वमसि। अतस्त्वमसंगादिरूपस्य तव वर्णाश्रमविलक्षणत्वात् कर्मासक्तिं परिविहाय चिति विश्राम्य सुखी प्राप्तपरमानंदो भवेत्यर्थः॥ ४॥

धर्माधर्मौ सुखं दुःखं मानसानि न ते विभो ॥ ॥
न कर्त्तासि न भोक्तासि मुक्त एवासि सर्वदा ॥ ५ ॥

ननु वेदोदितं कर्म विहाय चिति विश्रांतावपि प्रत्यवायप्रसंग इत्य
त आह धर्माधर्माविति धर्माधर्मादयो मनोधर्मा एव कालत्रये चितेः स
ह तव संबंधो नास्तीत्यर्थः। न कर्त्तेति। किंच विहितनिषिद्धकर्म कर्तुः ध
र्माधर्मादिद्वारा सुखदुःखभोक्तृत्वं तदपि तव नास्ति शुद्धबुद्धस्वरूपत्वात्
त्वं सर्वदा मुक्त एव अज्ञानमात्रविजृंभिते सुखदुःखे ते तु चिति विश्रां
त्यैवाज्ञाननिवृत्त्या न विजृंभिष्येते इत्यर्थः ॥ ५ ॥

एको द्रष्टासि सर्वस्य मुक्तप्रायोसि सर्वदा ॥
अयमेव हि ते बंधो द्रष्टारं पश्यसीतरम् ॥ ६ ॥

ननु शुद्धबुद्धस्वभावस्यैकस्य नित्यमुक्तस्यात्मनो बंधः किंनिबंधनो
यस्य निबंधस्य निवृत्त्यर्थं विवेकिनो यतंत इत्याशंक्य नित्यमुक्तस्यापि
प्रातीतिकं बंधहेतुमाह। एक इति। हे शिष्य सर्वस्य द्रष्टा प्रतिशरीरमेक
स्त्वमसि ततश्च व्यापकत्वात् सर्वदा मुक्तप्रायोसि देहाध्यासवशतो बंधे
प्रतीयमानेपि वस्तुगत्या मुक्तोसीत्यर्थः॥ अयमिति। हि निश्चितं अयमे
व ते तव बंधो यदितरं देहादिरूपं परिछिन्नं द्रष्टारं पश्यसीत्यर्थः ॥ ६ ॥

अहंकर्त्तेत्यहंमानमहाकृष्णाहिदंशितः ॥
नाहं कर्त्तेति विश्वासामृतं पीत्वा सुखी भव ॥ ७ ॥

पूर्वं बंधहेतुरुक्त अथानर्थहेतुं वदन्नेव तन्निवृत्तिपरमानंदप्राप्त्यु
पायमनुवदति। अहंकर्त्तेति। हे शिष्य अहंकर्त्तेत्येवं रूपो योहंमानः अ
हमित्यात्मनि कर्तृत्वाभिमानस्तद्रूपो महान् कृष्णसर्पः सुखदुःखविषा
वहस्तेन दंशितः कवलीकृतोतः कारणात् न कर्त्ता अहं अकर्त्ता आत्मा इ
त्येवंरूपं विश्वासामृतं निश्चयामृतं पीत्वानुभूय सुखी भव प्राप्तपरमा
नंदो भवेत्यर्थः ॥ ७ ॥

एको विशुद्धबोधोहमिति निश्चयवन्हिना ॥
प्रज्वाल्याज्ञानगहनं वीतशोकः सुखी भव ॥ ८ ॥

नन्वात्मज्ञानामृतपानं किंद्वारा सुखसाधनमित्याशंक्याज्ञानकानन
दहनद्वारा ज्ञानाग्निः सुखसाधनमित्याह ॥ एको विशुद्धबोधोहमिति

एकः सजातीयविजातीयस्वगतभेदरहितः विशुद्धबोधः स्वप्रकाशचि
दात्माहमितिनिश्चयाग्निना अज्ञानारण्यंगहनं प्रज्वाल्य प्रकर्षेण दग्ध्वा
शोकमोहरागद्वेषप्रवृत्तिजन्मापाया — द्वीतशोको विगतदुःखः सन् सुखी
भवेत्यर्थः ॥ ८ ॥ ॥

यत्र विश्वमिदं भाति कल्पितं रज्जुसर्पवत् ॥
आनंदपरमानंदः स बोधस्त्वं सुखं चर ॥ ९ ॥

नन्वात्मज्ञानेन अज्ञानदाहे सत्यपि सत्यस्य प्रपंचस्य ज्ञानादनिवृत्ते
र्वीतशोकः कथं स्यादित्याशंक्य प्रपंचस्य रज्जुभुजंगतुल्यत्वाज्ज्ञानाद्वि
निवृत्तौ दुःखहेतोरभावाद्वीतशोकता स्यादेवेत्याह। यत्रेति। यत्र बोधे
इदं विश्वं रज्जुसर्पवत् कल्पितं अधिष्ठानाज्ञानकल्पितं भाति स बोध
श्चिदात्मा त्वं सुखं चर यथा स्वप्नदशायामज्ञानकल्पितं व्याघ्रादि कंप
यति जाग्रद्बोधे निवर्त्य सुखं चरतितद्वदित्यर्थः। ननु दुःखहेतुप्रपं
चनिवृत्तौ दुःखाभावमात्रं स्यात्सुखं तु कथं स्यादित्याशंक्य स्वभावत
एव त्वं नित्यानंतानंदस्वरूप इत्याह। आनंदेति आनंदेभ्यो मनुष्यलो
कदेवलोकानंदेभ्यः परम उत्कृष्ट आनंदस्त्वमित्यर्थः ॥ ९ ॥

मुक्ताभिमानी मुक्तो हि बद्धो बद्धाभिमान्यपि ॥
किंवदंतीह सत्येयं या मतिः सा गतिर्भवेत् ॥ १० ॥

एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति श्रुतेः। ननु सर्वं
रज्जुसर्पवत्कल्पितं स्वभावतस्त्वानंद एवात्मेति चेत्तर्हि बंधमोक्षावा
त्मनः किंनिबंधनावित्याशंक्याह मुक्ताभिमानीति हि निश्चितं मुक्ता
भिमान्येव मुक्त अपि च बद्धाभिमानी बद्धः अत्र किंवदंतीं प्रमाणयति किं
वदंतीति या मतिः सा गतिर्भवेदियं प्रसिद्धा किंवदंती विद्वज्जनश्रुतिः स
त्या अबाधितार्था तं विद्याकर्मणी समन्वारभेते। पूर्वप्रज्ञा चेति श्रुतिपरि
गृहीतत्वात्। यंयं वापि स्मरन् भावं इत्यादिस्मृतिपरिगृहीतत्वाच्च। तथा
चाभिमानिकावेव बंधमोक्षौ न तु वास्तवावित्यर्थः पूर्वं मुक्तोप्ययमर्थो दु
र्बोधत्वात् पुनः पुनः शिष्यबोधार्थमुच्यत इत्यदोषः ॥ १० ॥

आत्मा साक्षी विभुः पूर्ण एको मुक्तश्चिदक्रियः ॥
असंगो निस्पृहः शांतो भ्रमात्संसारवानिव ॥ ११ ॥

ननुजीवात्मनःपारमार्थिकावेवबंधमोक्षाविति तार्किकाशंकामपाकर्त्तु माह॥ आत्मेति॥ आत्माभ्रमाद्देहादावात्मतादात्म्यभ्रमात्संसारवानिवप्रतीयते। ननुवस्तुतःसंसारी अत्रदश हेतूनाह। साक्षीति। कर्त्तुरहंकारादेः साक्षीनतुकर्त्ताविभुःविविधंभवत्यस्मादितिविभुःसर्वाधिष्ठानंपूर्णःव्यापकःएकःसजातीयविजातीयस्वगतभेदरहितःमुक्तः वस्तुगत्यामायातत्कार्यातीतः।चित्प्रकाशश्चैतन्यरूपोअक्रियश्चेष्टारहितःअसंगःसर्वसंबंधशून्यः असंगोह्ययंपुरुषइतिश्रुतेःनिस्पृहःविषयाभिलाषरहितः शांतःप्रवृत्तिनिवृत्तिदेहाद्यंतःकरणधर्मरहितः।तस्माद्वस्तुतोनसंसारी त्यर्थः॥११

कूटस्थंबोधमद्वैतमात्मानंपरिभावय॥ ॥
आभासोहंभ्रमंमुक्त्वाभावंबाह्यमथांतरम्॥१२॥

अहंपरिच्छिन्नोममेदंदेहादिकंसुखीदुःखीचाहमितिभ्रमस्यानादिपरंपरागतस्यसकृद्भावनयानिवर्त्तयितुमशक्यत्वादावृत्तिरसकृदुपदेशादितिव्याससूत्राच्चपुनःपुनरद्वैतात्मभावनांविजातीयभावनानिवृत्तिपुरःसरमुपदिशति। कूटस्थमिति। हेशिष्य आभासोहंअहंकारोहमिति भ्रमंमुक्त्वाबाह्यंभावंममेदंदेहादिकमितिबाह्यपदार्थविषयंभावंसंभावनांमुक्त्वा अथचांतरंभावंसुखीदुःखीमूढोहमिति आंतरपदार्थविषयंभावंभावनांमुक्त्वाअकर्तारंकूटस्थमसंगबोधस्वरूपमद्वैतमात्मानंपरिसिमंताद्व्यापकंभावयेत्यर्थः॥१२॥

देहाभिमानपाशेनचिरंबद्धोसिपुत्रक ॥
बोधोहंज्ञानखड्गेनतन्निःकृत्यसुखीभव॥१३॥

अनादिरयंदेहाभिमानःसकृद्भावनयाननिवर्त्ततइतिपुनःपुनर्ज्ञानखड्गेनतंनिराकृत्यसुखीभवेत्याह। देहाभिमानेति। हेपुत्रकशिष्यत्वंदेहोहमितिअभिमानपाशेनचिरंबहुकालंबद्धोसि। अतोबोधोहंचिद्रूपोहमितिज्ञानखड्गेनपुनःपुनस्तंपाशंनिःकृत्यनितरांछित्वासुखीभव॥१३

निःसंगोनिःक्रियोसित्वंस्वप्रकाशोनिरंजनः॥
अयमेवहितेबंधःसमाधिमनुतिष्ठसि॥१४॥

चित्तवृत्तिनिरोधरूपःसमाधिरेवकेवलोबंधनिवृत्तिहेतुरितिपातंजलमतमपाकर्त्तुमाह निःसंगइतिहेशिष्यत्वंवस्तुतोनिःसंगःसर्वसंबंध

शून्योसि। तथा क्रियारहितोसि। अत्र हेतुमाह। स्वप्रकाशो निरंजन इति निः क्रियस्त्वसमाध्यनुष्ठानं यत् अयमेव हि निश्चितं बंधः। तथा च ज्ञानातिरिक्तोपास्यानुष्ठानमात्रं प्रस्तुतबंधएवेत्यर्थः॥१४॥

त्वया व्याप्तमिदं विश्वं त्वयि प्रोतं यथार्थतः॥
शुद्धबुद्धस्वरूपस्त्वं मागमः क्षुद्रचित्ततां॥१५॥

तदेवमात्मज्ञानातिरिक्तः समाधिरपि पूर्वं निराकृतः अथ परिपूर्णं शुद्धबुद्धात्मनि विपरीतधियमुत्सारयन्नेव चित्तनिष्ठामुपसंहरति श्लोकद्वयेन। त्वयेति। हे शिष्य इदं विश्वं त्वया व्याप्तं कनकेनेव कटककुंडलादिकं यथा तथा इदं विश्वं त्वयि प्रोतं सूत्रेव घटशरावादिकं। हे शिष्य यथार्थतः परमार्थतः शुद्धः अविद्यातत्कार्यं प्रपंचातीतः। बुद्धः स्वप्रकाशः चिद्रूपोसि एवं च सर्वगंधः सर्वरसो नेति नेतीति श्रुतिद्वयानुसारेणोक्ताभ्यामध्यारोपापवादाभ्यां निःप्रपंचमात्मतत्वमुपदिष्टं भवतीति। हे शिष्य परिपूर्णशुद्धबुद्धस्वरूपस्त्वं क्षुद्रचित्ततां विपरीतचित्तवृत्तिं मागमः माकार्षीरित्यर्थः॥१५

निरपेक्षो निर्विकारो निर्भरः शीतलाशयः॥
अगाधबुद्धिरक्षुब्धो भव चिन्मात्रवासनः॥१६॥

प्रतीयमानाः षडूर्मयः षड्भावविकारा न त्वद्गतास्त्वं तु तद्विलक्षण इत्याह॥ निरपेक्ष इति। हे शिष्य त्वं निरपेक्षः। अशनापिपासा षडूर्मिसंसर्गातीतः। तथा निर्विकारः। जायते अस्ति वर्द्धते विपरिणमते अपक्षीयते विनश्यतीत्येवंविधाः यास्कादिप्रोक्ताः षड्भावविकारास्तत्संसर्गरहितस्त्वमित्यर्थः तर्हि किदृशोहमिति अत आह निर्भर इति। निर्भरश्चिद्घनरूपः शीतलः सुखस्वरूपः। आमुक्तिसमयमभिव्याप्य शीते तिष्ठतीत्याशयः अगाधा अतलस्पर्शी अपरिच्छिन्ना बुद्धिः स्वरूपचैतन्यं तद्रूपः अक्षुब्धः अविद्याकृतक्षोभरहितस्त्वं। वस्तुतोसि अतस्त्वं क्रियामात्ररहितश्चिन्मात्रनिष्ठो भवेत्यर्थः॥१६॥ प्रकरणं समाप्तं॥

साकारमनृतं विद्धि निराकारं तु निश्चलम्॥
एतत्तत्वोपदेशेन न पुनर्भवसंभवः॥१७॥

विषयान् विषवत्त्यज[illegible]के मो सो ----

पामः प्रथमश्लोके समुपदिष्टः परंतु विषयाणां विषतुल्यत्वे सत्यात्मनः पीयूषतुल्यत्वे च हेतुर्नोक्तो तस्तत्र हेतुं वदन्नेव षोडशश्लोकोपदेशो मोक्षहेतुश्चिदात्मा च स्वाध्यस्तं विश्वं समंततो व्याप्यावस्थितोमुकुरइव स्वाध्यस्तं शरीरं इति तद्भावापत्तिरेव परमपुरुषार्थ इत्युपपत्तिमुखेन प्रकरणार्थं संगृह्णाति श्लोकत्रयेण अथ संग्रहश्लोकाः साकार इत्यादिना॥ साकारमिति। अथ हे शिष्य। साकारं शरीरादिकं अनृतं मिथ्याभूतं विद्धि अतस्तद्विषयस्त्यजेथैः निराकारमात्मतत्वं निश्चलं कालत्रयावस्थायि विद्धि। सर्वसाक्षित्वान्नित्यं विज्ञानमानंदं ब्रह्मेति श्रुतेश्च अतएतत्तत्वचिन्मात्रोपदेशेन उपदिश्यमानेन तत्रैव विश्रम्यावस्थानेन न पुनर्भवस्य मोक्षस्य च संभवः सिद्धिरित्यर्थः॥१७

यथैवादर्शमध्यस्थे रूपेंतः परितस्तु सः॥
तथैवास्मिन्शरीरेंतः परितः परमेश्वरः॥१८॥

अथ वर्णाश्रमधर्मस्थूलशरीरात्पुण्यधर्मैकलिंगशरीराच्चविलक्षणं परिपूर्णचैतन्यं सदृष्टांतं निरूपयति। यथैवेति। यथैवादर्शप्रतिबिंबितेशरीरादौ अंतर्मध्ये परितो वहिश्च स आदर्शो व्याप्य वर्त्तते। तथैव स्वाध्यस्तेस्मिन् स्थूले शरीरे अंतः परितश्च परश्चिदात्मा व्याप्य स्थितः। तथा च यत्र विश्वमिदं भाति कल्पितं रज्जुसर्पवत् इत्यादि सर्वोपि प्रकरणार्थः संक्षेपतः सूचितः॥१८॥

एकं सर्वगतं व्योम बहिरंतर्यथा घटे॥ नित्यं निरंतरं ब्रह्म सर्वभूतगणे तथा॥१९॥ इति प्रकरणं संपूर्णम्॥

आदर्शदृष्टांते परिच्छिन्नत्वादिभ्रमापत्तिः स्वाध्यस्तशरीरांतर्वर्तित्वं च नस्पष्टमतो घटाकाशदृष्टांतेन बाह्याभ्यंतरव्यापकत्वमाह। एकं सर्वगतमिति। यथा सर्वगतमेकं नित्यं व्योम घटपटादौ बहिरंतश्च वर्त्तते तथा नित्यं अविनाशि ब्रह्म सर्वभूतगणे वहिरंतरं सर्वदा वर्त्तत इत्यर्थः। एष त आत्मा सर्वस्यांतर इति श्रुतेः। अतश्च बोधोहमिति ज्ञानखड्गेन देहादहंभावपाशं निःकृत्य सुखी भवेत्यर्थः १९

इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायामात्मानुभवोपदेशप्रकरणं संपूर्णं॥

अहो निरंजनः शांतो बोधो हं प्रकृतेः परः॥

एतावंतमहंकालंमोहेनैवविडंवितः ॥१॥

इत्थंगुरूक्तिपीयूषास्वादात्नुभवमात्मानः आवि---
ष्कारस्याश्चर्यंशिष्योनिजगुरुंप्रति तत्रतावच्छिष्यश्चिद्रूपात्मानुभवमाविःकुर्वन्नेवगुरुकृतोपकारख्यापनायप्राचीनसंस्कारवशात्वाधितानुवृत्याप्रतीतस्यमोहविडंवनस्यस्मरणमाविष्करोति॥अहोइति।अहष्टस्याद्भुतस्यानुभवादहोइत्याश्चर्यंअहंनिरंजनःसर्वोपाधिविनिर्मुक्तःशांतःसर्वविकारातीतप्रकृतेःपरोमायांधकारस्यशंभून्योबोधः।स्वप्रकाशचिद्रूपइत्यर्थः।गुरूपकारख्यापनायमोहविडंबनमनुस्मरति।एतावंतमिति।एतावंतंगुरूपदेशावधिकालंमोहेनदेहात्माविवेकेनविडंवितएवसांप्रतंतुश्रीगुरुप्रसादादात्मानंदानुभवोस्मीतिविवक्षितोर्थः॥१॥

यथाप्रकाशयाम्येकोदेहमेनंतथाजगत्॥
अतोममजगत्सर्वमथवाचनकिंचन॥२॥

पूर्वकालीनंमोहविडंवनमुक्तं।संप्रतिगुरुप्रसादान्ममदेहात्मविवेकोस्तीतिसोपपत्तिकमाह।यथेति।अहंयथाएकएवजगत्प्रकाशयामि।तथैवैनंस्थूलंदेहंप्रकाशयामि।तथाच॥देहोनात्माऽप्रकाशत्वाज्जगत्तद्वदित्यर्थः कस्तर्हिजगदादिदेहात्मनोःसंबंधइत्याशंक्ययुक्तिविचाराद्याध्यासिकःसंबंधःपरमार्थगत्याचनकश्चित्संबंधः इत्याहातोममेति।अतोदृश्यत्वात्।सर्वंदेहप्रमुखंजगन्ममदीयंमय्यध्यस्तमित्यर्थः।चोवधारणेअथवापरमार्थविचारेकिंचनकिमपिदेहादिकंममनचनैवमय्यध्यस्तमित्यर्थः।तदेवमध्यारोपापवादाभ्यांप्रकृतेःपरोबोधोहमित्येवात्रस्फुटीकृतं॥२॥ ॥ ॥

सशरीरमहोविश्वंपरित्यज्यमयाधुना॥
कुतश्चित्कौशलादेवपरमात्माविलोक्यते॥३॥

ननुलिंगदेहात्कारणदेहाच्चविवेकाभावेकथंप्रकृत्यतिरिक्तात्मबोधइत्याशंक्यततोपिविवेकजमात्मानुभवमाह॥सशरीरमिति।अहोइत्याश्चर्ये।सशरीरंलिंगशरीरकारणशरीरसहितंविश्वंपरित्यज्यतिचातःपृथक्सतयानिषिध्यकुतश्चित्शास्त्राचार्योपदे

शलभ्यात् कौशलाच्चातुर्यादेव परमश्रेष्ठ आत्मा मयाविलोक्यते नान्यः परमात्मावलोकनोपाय इत्यर्थः ॥३॥

यथा न तोयतो भिन्नास्तरंगाः फेनबुद्बुदाः ॥
आत्मनो न तथा भिन्नं विश्वमात्मविनिर्गतं ॥४॥

सशरीरविश्वस्य पृथक्सत्तया परित्यज्य तं सदृष्टांतं निरूपयति यथा न तोयत इति। यथा तरंगाः फेनबुद्बुदाश्च न तोयतो भिन्नाः तदुपादानत्वात् तथा आत्मविनिर्गतं आत्मनः संजातं आत्मोपादानकं विश्वं आत्मनो न भिन्नं एवं च तोयतरंगादिषु जलं यथा स्वक्रमनुगतं तथा स्वरूपोऽहं विश्वस्मिन्नधिष्ठानभूतो न मत्तोन्यद्विश्वमित्यर्थः ॥४॥ ॥

तंतुमात्रो भवेदेव पटो यद्वद्विचारितः ॥
आत्मतन्मात्रमेवेदं तद्वद्विश्वं विचारितं ॥५॥

दृष्टांतांतरेणात्मरूपतया सर्वावलोकनं निरूपयति तंतुमात्र इति। स्थूलदृष्ट्या तंतुवैलक्षण्येन प्रतीयमानोपि पटो विचारितः विचारवीक्षितः सन् यद्वद्यथा तंतुमात्रो भवेत्। अस्ति। तद्वत्तथा इदं स्थूलदृष्ट्या ब्रह्मवैलक्षण्येनापि प्रतीयमानं विश्वं युक्त्या विचारितं सत् आत्मतन्मात्रमेव आत्मसत्तामात्रात्मकमेव एतेन तंतुः स्वसत्तया यथा पटेनुगतस्तथात्मापि स्वसत्तयाधिष्ठानभूतो विश्वस्मिन्नजगत इत्यर्थः ॥५॥

यथैवेक्षुरसे क्लृप्ता तेन व्याप्तैव शर्करा ॥
तथा विश्वं मयि क्लृप्तं मया व्याप्तं निरंतरं ॥६॥

आत्मनैव सर्वं व्याप्तमित्यत्र दृष्टांतांतरमाह। यथैवेति। यथैवेक्षुरसे क्लृप्ता अध्यस्ता शर्करा। तेन मधुररसेन व्याप्तैव सर्वापि व्याप्ता। तथैव मयि नित्यानंदस्वरूपे क्लृप्तं अध्यस्तं विश्वं मया नित्यानंदेन निरंतरं बाह्याभ्यंतरं व्याप्तं तस्माद्विश्वमानंदात्मस्वरूपमेवेत्यर्थः। तदेवमस्ति भाति प्रियमित्येवं रूपेणाहमेव सर्वत्रावस्थित इति श्लोकत्रयविवक्षितोर्थः ॥६॥

आत्माज्ञानाज्जगद्भाति आत्मज्ञानान्न भासते ॥
रज्ज्वज्ञानादहिर्भाति तद्ज्ञानाद्भासते न हि ॥७॥

विश्वं चेदात्मनो न भिन्नं तर्हि केन कारणेनेदं भासते केन न [illegible]

न्भासत इत्याशंक्याह ॥ आत्माज्ञानादिति ॥ आत्मन अज्ञानाज्जगद्भा
ति। तथा आत्मन अधिष्ठानस्य ज्ञानान्नभासते अधिष्ठानाज्ञानादन्यस्य
भाने ऽधिष्ठानज्ञानाद्भाभाने लोकप्रसिद्धं दृष्टांतमाह रज्ज्वज्ञानादिति।
हि यथा रज्जुस्वरूपस्याज्ञानादहिः सर्पो भाति तद्ज्ञानाद्रज्जुज्ञानान्नभासते

प्रकाशो मे निजं रूपं नातिरिक्तोस्म्यहं ततः ॥ ॥७॥
यदा प्रकाशते विश्वं तदाहं भास एव हि ॥ ८ ॥

नन्वात्मन अज्ञाने सति आत्मप्रकाशाभावाज्जगत्कथं भासत इ
त्याशंक्य स्वरूपचैतन्यबलादेवेत्याह ॥ प्रकाश इति। प्रकाशो नित्यबो
धः मे मम निजं स्वाभाविकं स्वरूपं अहं ततः प्रकाशादतिरिक्तः भिन्नो
नास्मि। अतो मम यदा विश्वं प्रकाशते तदा अहं भासा दात्मप्रकाशादेव
भासते। स्वरूपचैतन्यं चेद्भासकं तदा कथमज्ञानमिति चेन्नैवं नहि स्व
चैतन्यमज्ञानविरोधि किंतु साधकमेव। अन्यथा जडस्य सिद्धिरेव न
स्यात्। किंच आत्मस्वरूपप्रकाशाभावे स्वात्मनोप्यसत्वप्रसक्तिर्जग
दांध्यप्रसंगश्च तस्माद्यदा विश्वं प्रकाशते तदात्मस्वरूपप्रकाशादे
वेति भावः ॥ ८ ॥

अहो विकल्पितं विश्वमज्ञानान्मयि भासते ॥
रूप्यं शुक्तौ फणी रज्जौ वारि सूर्यकरे यथा ॥ ९ ॥

स्वप्रकाशेपि मय्यात्मन्यज्ञानवशाद्विश्वं भासत इति महदाश्चर्यं
सदृष्टांतमाह। अहो इति। स्वप्रकाशेपि मयि अज्ञानाद्विकल्पितं र
चितं अध्यस्तं विश्वं मयि भासते अहो आश्चर्यमिदं। यथा शुक्त्या
दौ रूप्यादिकं भासते तद्वदित्यर्थः ॥ ९ ॥

मत्तो विनिर्गतं विश्वं मय्येव लयमेष्यति ॥
मृदि कुंभो जले वीचिः कनके कटकं यथा ॥ १० ॥

ननु मायाविकारित्वात् तत्रैव विश्वमुत्पद्यते तत्रैव लयमेष्यति
ननु चैतन्यात्मनीति सांख्यमतमपाकर्तुमाह। मत्तो विनिर्गतमि
ति। इदं विश्वं मत्त एव विनिर्गतं मय्येव लयमेष्यति। प्राप्स्यति यथा
मृदादौ कुंभादिकं तद्वदित्यर्थः। न चात्र प्रमाणाभाव इति शंकनीयं।
[illegible]

विशंतीतिश्रुतेः॥१०॥

अहो अहं नमो मह्यं विनाशो यस्य नास्ति मे॥
ब्रह्मादिस्तंबपर्यंतं जगन्नाशेपि तिष्ठति॥११॥

ननु ब्रह्म चेज्जगदुपादानकारणं तर्हि तस्य विकारित्वान्मृदादिवद्विनाशित्वापत्तिरित्याशंक्याह॥ अहो इति। अहो आश्चर्यरूपोहं यस्य मम सर्वोपादानभूतस्यापि विनाशो नास्ति न चोपादानत्वे सुवर्णादिवद्विनाशित्वापत्तिः सुवर्णादिवद्विकारित्वानंगीकाराद्विवर्ताधिष्ठानत्वेनैवोपादानत्वस्वीकारात्। अत एवाशेषकार्योपादानत्वादविनाशिने सर्वोत्कृष्टाय मह्यं नमः ब्रह्मादि देवतावत् प्रलये विनाशशंकां वारयति करोति। ब्रह्मादिस्तंबपर्यंतं यज्जगत्तस्य नाशेपि तिष्ठति प्रलयेपि स्थितिमतो यस्य मे नाशो नास्तीत्यर्थः सत्यं ज्ञानमनंतं ब्रह्मेति श्रुतेः॥११॥

अहो अहं नमो मह्यमेकोहं देहवानपि॥ ॥
क्वचिन्न गंता नागंता व्याप्य विश्वमवस्थितः॥१२॥

नन्वात्मा सुखदुःखावच्छेदकदेहवत्त्वान्नाना तथाहंकाररूपत्वात्तत्तद्देहागमनागमनवानित्याशंक्याह अहो अहमिति। अहो आश्चर्यरूपोहं आश्चर्यरूपाय मह्यं नमः आश्चर्यरूपत्वमेवाह। एकोहमिति। नानासुखदुःखावच्छेदकदेहवानप्यहमेक एव। यथा नानासकंपनिःकंपत्वावच्छेदकजलोपाधिमानपि भानुरेक एवेत्यर्थः। क्वचिदिति। विश्वं व्याप्यावस्थितः परिच्छिन्नाहंकारविलक्षणोहं क्वचिदपि न गंता कुतोपि नागंता एवेत्यर्थः॥१२॥

अहो अहं नमो मह्यं दक्षो नास्तीह मत्समः॥
असंस्पृश्य शरीरेण येन विश्वं चिरं धृतं॥१३॥

नन्वात्मनः निःसंगत्वं कथं शरीरसंसर्गितया जगद्धारकत्वादित्याशंक्याह॥ अहो अहमिति। प्रथमपादार्थः। पूर्ववदिति प्रकारेणान्मत्समो दक्षो असंभाव्यकार्यविधानचतुरः कोपि नास्ति। येन हेतुना शरीरेणासंस्पृश्य घृतपिंडेनोल्मुकवदसंबध्यैव चिरं बहुकालं विश्वं स्थावरजंगमं मया धृतं॥१३॥

अहो अहं नमो मह्यं यस्य मे नास्ति किंचन॥

अथवा यस्य मे सर्वं यद्वाङ्मनसगोचरं ॥ १४ ॥

नन्वसंबन्धस्य न जगद्विधारकत्वं संबन्धस्यैवमित्यादेर्गृहादिधारकत्वादित्याशंक्याह अहो अहमिति। अहो आश्चर्यरूपोऽहं तस्मै मे नमः यस्य मे संबन्धि परमार्थगत्या किंचन किमपि नास्ति। परमार्थसतो द्वितीयस्यैवाभावात्। अथवा यत् यावत्वाङ्मनसगोचरं तावत्सर्वं यस्य मे मम संबन्धि मिथ्यातादात्म्यसंबन्धः सुवर्णकुंडलादिवदित्यर्थः अत एव सर्वसंबन्धित्वासंबन्धित्वाभ्यामाश्चर्यरूपाय मह्यं नम इत्यर्थः १४

ज्ञानं ज्ञेयं तथा ज्ञाता त्रितयं नास्ति वास्तवं ॥

अज्ञानाद्भाति यत्रेदं सोऽहमस्मि निरंजनः ॥ १५ ॥

ननु त्रिपुटीरूपसंसारस्य पारमार्थिकत्वात् कथं मिथ्यातादात्म्यसंबन्धो जगदात्मनोरित्याशंक्याह। ज्ञानं ज्ञेयमिति। ज्ञानं ज्ञेयं तथा ज्ञाता इत्यादिकं त्रितयं त्रिपुटीरूपं सर्वं वास्तवं पारमार्थिकं नास्ति। यत्र मयि इदं त्रितयं अज्ञानात् अनिर्वचनीयाज्ञानान्मिथ्यातादात्म्येनाध्यस्तं भाति। अत एव वस्तुगत्याहं निरंजनः प्रपंचमलसंबन्धशून्योऽस्मीत्यर्थः ॥ १५ ॥

द्वैतमूलमहो दुःखं नान्यत्तस्यास्ति भेषजं ॥

दृश्यमेतन्मृषा सर्वमेकोऽहं चिद्रसोऽमलः ॥ १६ ॥

ननु निरंजनस्य कथं दुःखसंबन्ध इत्याशंक्य द्वैतभ्रांतिमूलक एवासौ न तु वास्तव इत्याह। द्वैतमूलमिति। अहो आश्चर्यं निरंजनस्याप्यात्मनः द्वैतमूलं दुःखं द्वैतभ्रमस्तु दुःखाध्यासो न तु वास्तवं दुःखमित्यर्थः। दुःखाध्यासमहाव्याधेः किं भिषजमित्याशंक्याह नान्यदिति। अमलो माया तत्कार्यातीतश्चिद्रसश्चिन्मात्रस्वरूप एकोऽहं। एतत्प्रतीयमानं सर्वं दृश्यं जडजातं मृषा मिथ्या न पारमार्थिकमिति बोधादन्यत्तस्य त्रिविधदुःखव्याधेः भेषजं नास्तीत्यर्थः ॥ १६ ॥

बोधमात्रोऽहमज्ञानादुपाधिः कल्पितो मया ॥

एवं विमृशतो नित्यं निर्विकल्पे स्थितिर्मम ॥ १७ ॥

नन्वयं द्वैतप्रपंचाध्यासः किंनिमित्तः किमुपादानक इत्याशंक्याह बोधेति। बोधमात्रश्चिदेकस्वरूपोऽहमेव पारमार्थिकः मया सर्वो

पादानभूतेनकर्त्राज्ञानादखंडज्ञानरूपान्निमित्तादहंकारप्रमुखाउपाधिद्वैतप्रपंचः कल्पितः। एवंविचारस्यफलमाह। एवमिति। एवं नित्यंविमृशतोविचारयतोममनिर्विकल्पेनिरस्तद्वैतेस्वरूपचैतन्येस्थितिःप्राप्तिर्जाता॥१७॥

अहोमयिस्थितंविश्वंवस्तुतोमयिनस्थितं॥
नमेबंधोस्तिमोक्षोवाभ्रांतिःशांतानिराश्रया॥१८

ननुस्वरूपचैतन्यप्राप्तिरूपामुक्तिःप्रागुक्ताविचारजन्याचेत्तदामुक्तेर्विनाशापत्तिःजन्यभावस्यविनाशित्वनियमात्‌विचाराजन्याचेत्तदाविचाररहितानामपिमोक्षापत्तिरित्याशंक्याह। अहोइति। वस्तुतोमेममबंधोनास्ति। नचमोक्षोप्यस्तिनित्यचिद्रूपत्वात्‌तर्हिशास्त्रविचारस्यकिंफलंइत्याशंक्यभ्रांतिनिवृत्तिरेवतत्फलमित्याह। अहोमयीति। अहोआश्चर्यं। मयिस्थितमपिविश्वंवस्तुतःकालत्रयेमयिनस्थितमितिविचारतोपिभ्रांतिरेवशांतानतुपरमानंदावाप्तिर्जनिता आत्मनःसर्वदापरमानंदरूपत्वात्‌। कीदृशीभ्रांतिर्निराश्रया। उक्तविचारादज्ञानस्यनष्टत्वान्निर्मूलेत्यर्थः॥१८॥ ॥

सशरीरमिदंविश्वंनकिंचिदितिनिश्चितम्‌ ॥
शुद्धश्चिन्मात्रआत्माचतत्कस्मिन्कल्पनाधुना॥१९

नन्वधिष्ठानस्योपादानस्यसत्वान्मुक्तेष्वपिप्रपंचोदयःस्यादित्याशंक्याह सशरीरमिति। शरीरसहितमिदंविश्वंनकिंचित्सत्यंनाप्यसत्यमितिनिश्चितं। नेहनानास्तिकिंचनेतिश्रुतेः आत्माचचिन्मात्रःशुद्धःमायामलशून्यस्ततस्मात्कारणादधुनाऽज्ञाननिवृत्तौसत्यांकस्मिन्नधिष्ठानेविश्वकल्पनास्यान्नकस्मिन्नपीत्यर्थः॥१९

शरीरंस्वर्गनरकौबंधमोक्षौभयंतथा ॥
कल्पनामात्रमेवैतत्किंमेकार्यंचिदात्मनः॥२०

ननुसर्वस्यप्रपंचस्यावास्तवत्वेवर्णजात्याश्रयंशरीरमप्यवास्तवमेवेतिशरीरविशेषमधिकृत्यप्रवर्तमानविधिनिषेधशास्त्रमप्यवास्तवंस्यात्‌। तथाचतद्बोधितंस्वर्गनरकयोरप्यवास्तवत्वात्‌स्वर्गादावनुरागोनरकादिभ्यश्चभयंनस्यात्‌॥ किंच। शास्त्रबोधि

बंधमोक्षावपिवास्तवौ नस्यातामित्याशंक्य दृष्टापत्त्या परिहरति। शरीरमिति। शरीरादिकमेवैतत् कल्पनामात्रमेव चिदात्मनः सच्चिदानंदस्वरूपस्य मम एतैः शरीरादिभिः किंकार्यं न किमपिकार्यं साध्यं विधिनिषेधादिकं त्वविद्यावंतमेवाधिकृत्य प्रमाणमित्यर्थः॥२०॥

अहोजनसमूहेपिन द्वैतंपश्यतोमम॥
अरण्यमिवसंवृत्तंक्वरतिंकरवाण्यहं॥२१॥

स्वर्गादिभिः किंमे कार्यमिति प्रागुक्तं। अथेहलोकेनापिमेकार्यं नास्तीत्याह। अहोजनेति। नद्वैतं पश्यतोमम अहोइत्याश्चर्ये जनसमूहेपि अरण्यमिवसंवृत्तं संजातं तस्मादहं मिथ्यात्वेक्वरतिं प्रीतिंकरवाणि न क्वापीत्यर्थः॥२१॥

नाहंदेहोनमेदेहोजीवोनाहमहंहिचित्॥
अयमेवहिमेबंधआसीद्याजीवितेस्पृहा॥२२॥

ननुशरीरस्याहंममतास्पदतयानुरागविषयत्वादहंकारस्याप्यहंतास्पदतयानुरागविषयत्वात्तत्रस्पृहास्यादित्या — शंक्याह नाहमिति अहंदेहोनजडत्वान्नापिमेदेहः ममनिःसंगत्वात् जीवोहंकारोनाहंकर्तृत्वात्। आत्मनश्चाकर्तृत्वात् कस्तर्हित्वमित्याशंक्याह। अहंहिचिदिति। चित्स्वरूपएवाहमित्यर्थः कुतस्तर्हिविवेकिनामपिजीवितेस्पृहेत्याशंक्याह अयमेवहीति। याजीवितेस्पृहा अयंमेबंधः प्रागासीत्। जीवनार्थं हिपुमान्सुवर्णाहरणादिकमपिकरोतीतिजीवितेच्छाबंधः बंधहेतुत्वात्। इदानींतुसच्चिदानंदानुभवशालिनोममासंगस्य प्राणानुषंगबंधनरूपेजीवितेपिस्पृहानास्तीत्यर्थः॥२२॥

अहोभुवनकल्लोलैर्विचित्रैर्द्राक्समुत्थितं॥
मय्यनंतमहांभोधौचित्तवातेसमुद्यते॥२३॥

अथस्वस्यसर्वाधिष्टानत्वंपश्यन्नाह। अहोइति। आश्चर्ये। अनंतमहांभोधौमयिचित्तवातेसमुद्यते समुत्पन्ने सति विचित्रैर्नानाविधैः भुवनकल्लोलैः भुवनरूपैस्तरंगैः द्राक् अत्यर्थं समुदितं उदयोलब्धः यथावारिधेस्तरंगाइवतथामत्तोभुवनानिवस्तुतोनभिन्नानीत्य र्थः

मय्यनंतमहांभोधौ चित्तवाते प्रशाम्यति ॥
अभाग्याज्जीववणिजो जगत्पोतो विनश्वरः ॥ २४ ॥

प्रारब्धक्षयदशामनुवदति। मयीति। अनंतमहांभोधौ सर्वव्यापकचित्समुद्रे मयि चित्तवाते संकल्पविकल्पशालिनि मनोमारुते प्रशाम्यति सति संकल्पादिरहिते सति जीववणिजो जीवात्मलक्षणस्य वाणिज्यकर्तुः अभाग्यात् प्रारब्धक्षयात् जगत्पोतः शरीरादिनौकासमूहः विनाशवान् भवतीत्यर्थः ॥ २४ ॥

मय्यनंतमहांभोधावाश्चर्यं जीववीचयः ॥ उद्यंति घ्नंति खेलंति प्रविशंति स्वभावतः ॥ २५ ॥ इत्यष्टावक्रप्रकरणे शिष्योक्तिः

अथ बाधितानुवृत्त्या स्वस्मिन् सर्वजीवव्यवहारं पश्यन्नाह। मयीति। आश्चर्ये निःक्रिये निर्विकारे मयि अनंतमहांभोधौ जीवा एव वीचयस्तरंगा उद्यंति। अभिव्यक्ता भवंतीव मिथः परस्परं घ्नंति ताडयंतीव शत्रुभावाध्यासात्। अन्ये च मिथः खेलंतीव मित्रभावाध्यासात्। अविद्याकामकर्मक्षये सति च मयि विशंतीव कस्मात्स्वभावतः अविद्याकामकर्मस्वभाववशात् उत्पत्त्यादिकं प्राप्नुवंति स्वभावतः स्वस्य चिद्रूपस्यांशरूपेण स्वभावतः तत्रैव प्रविशंति घटाकाशादय इव महाकाश इति विवेकः ॥ २५ ॥ द्वितीयेस्मिन् प्रकरणे शिष्येणानुभवस्थितिः निवेदिता गुरोस्तु ष्ट्यै वह्वाश्चर्यपुरःसरा ॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां शिष्येणोक्तमात्मानुभवोल्लासः पंचविंशतिकं ॥

अविनाशिनमात्मानमेकं विज्ञाय तत्त्वतः ॥
तवात्मज्ञस्य धीरस्य कथमर्थार्जने रतिः ॥ १ ॥

शिष्यानुभवपीयूषे ज्ञातेपि करुणावशात् तद्विज्ञानपरीक्षार्थं शिष्यमाह गुरुः पुनः विज्ञातानुभवमपि स्वशिष्यं व्यवहारस्थितं दृष्ट्वा तद्विज्ञानपरीक्षार्थं तद्व्यवहारे स्थितिमाक्षिप्यात्मानुभवशालिनीं स्थितिमुपदिशति। अविनाशिनमिति हे शिष्य। अविनाशिनं निर्विकल्पं त्रैकालिकसत्ताशालिनं कालतो व्यवच्छेदशून्यं आत्मानं देशतो व्यवच्छेदशून्यं एकं वस्तुतो व्यवच्छेदशून्यं चित्स्व

रूपंविज्ञायविदिध्यस्यतत्त्वतःआत्मज्ञस्यअतएवधीरस्यतवअर्था र्जनेव्यवहारिकार्थसंग्रहेकथंरतिःप्रीतिर्लक्ष्यतेइत्याक्षेपः॥१॥

आत्माज्ञानादहोप्रीतिर्विषयभ्रमगोचरे॥
शुक्तेरज्ञानतोलोभोयथारजतविभ्रमे॥२॥

ननुज्ञानेसतिविषयसंग्रहः कथमनुपपन्नइत्याशंक्यविषयप्री तेरात्माज्ञानमूलत्वंसदृष्टांतंसोपपत्तिकमाह आत्माज्ञानादिति। अहोइतिसंबोधने।हेशिष्यविषयभ्रमगोचरेविषयेयाप्रीतिः।सा आत्माज्ञानादेवभवति नतुज्ञानात्तद्व्यतिरिक्तविषयाणांबाधादिति भावः।अत्रलोकप्रसिद्धंदृष्टांतमाह। शुक्तेरिति।यथारजतविभ्रमे सतिशुक्तेरज्ञानतोलोभःपामराणामपिअनुभवसाक्षिकइत्यर्थः विषयभ्रमगोचरइत्यत्रविशेष्यस्यापिपूर्वनिपातोविशेषणंविशेष्ये णबहुलमित्यत्रबहुलग्रहणादात्मत्वस्व दात्माज्ञानादितिपदंविष यभ्रमगोचरइत्यनेनापिसंबध्यते॥२॥

विश्वंस्फुरतियत्रेदंतरंगाइवसागरे॥ ॥
सोहमस्मीतिविज्ञायकिंदीनइवधावसि॥३॥

अज्ञानमूलाविषयप्रीतिरितिप्रागुक्तंअथसर्वाध्यस्ताधिष्ठानत यात्मनिज्ञातेसतिविषयेषुपुनः नप्रीतिःसंभवतिइत्याह।विश्वंस्फु रतीतिसागरेतरंगाइवयथाएथक्सत्तारहितास्तद्वद्यत्रेदंविश्वंए थक्सत्तारहितंस्फुरति।सत्तत्पदार्थोहमस्मीतिविज्ञायसाक्षात् कृत्यदीनइवममेदंभवत्विति त्वमाकुलइवकिंधावसिकथंधाव सीतिआक्षेपः॥३॥

श्रुत्वापिशुद्धचैतन्यमात्मानमतिसुंदरं॥
उपस्थेत्यंतसंसक्तोमालिन्यमधिगच्छसि॥४॥

तदेवंश्लोकत्रयेणज्ञानिनिशिष्येदृश्यमानंविषयव्यवहारमाक्षि प्येदानींसर्वज्ञानिषुविषयव्यवहारंशिष्यपरीक्षार्थंगुरुराक्षिपतिश्रु त्वापीतिशुद्धचैतन्यंश्रुत्वापिगुरुमुखाद्वेदांतवाक्यतःसाक्षात्कृ त्वापिउपस्थेसमीपस्थेविषयेत्यंतसंसक्तःसन्नात्मज्ञः कथंमालि न्यमौढ्यमधिगच्छतिप्राप्नोति।अस्यप्रकरणस्यशिष्यजिज्ञासार्थ

मास्वेपमुद्ययेवप्रवृत्तत्वाद्यन्नासेपवाचकंपदंनदृश्यतेतन्नतदध्याहर्त्तव्यम् ॥४॥

सर्वभूतेषु चात्मानंसर्वभूतानि चात्मनि ॥
मुनेर्जानत आश्चर्यंममत्वमनुवर्त्तते॥५॥

पुनराश्चर्यमुद्वाक्षिपति। सर्वभूतेष्विति। सर्वभूतेषु ब्रह्मादिस्थावरांतेषु आत्मानं अधिष्ठानभूतंजानतः सर्वभूतानि चात्मनि रज्जौ भुजंगवदध्यस्तानिजानतोमुनेर्विषयेषुममत्वमनुवर्त्ततेइति आश्चर्यं असंभाव्यंनहिशुक्तिकायामध्यस्तंरजतंइतिजानतस्तत्रममत्वं संभवतीतिभावः॥५॥

आस्थितःपरमाद्वैतंमोक्षार्थेपिव्यवस्थितः ॥
आश्चर्यंकामवशगोविकलःकेलिशिक्षया॥६॥

आस्थितइति। आस्थितः परमंसजातीयस्वगतभेदशून्यमद्वैतमास्थितःसाक्षादनुभवन् तथामोक्षस्वरूपोर्थःसच्चिदानंदात्मातत्रव्यवस्थितः तदेकप्रवणोपिकामवशगः सन्केलिशिक्षयानानाक्रीडाभ्यासेनविकलोदृश्यतेइत्याश्चर्यं॥६॥

उद्भूतंज्ञानदुर्मित्रमवधार्यातिदुर्बलः ॥ ॥
आश्चर्यंकाममाकांक्षेत्कालमंतमनुश्रितः॥७॥

उद्भूतमिति। उद्भूतं कामंज्ञानदुर्मित्रंज्ञानसाक्षात्कारवैरिणमवधार्य निश्चित्यापि अतिदुर्बलअतिशयेनबलशून्यइवज्ञानीकामंविषयमाकांक्षेत् कामंवांछति इदमाश्चर्यंकीदृशः।अंतंकालमनुसमीपेश्रितः। नहिसमीपवर्त्तिन्यंतकालेसतिविवेकिनोविषयत्स्पृहायुक्तेतिभावः॥७॥

इहामुत्रविरक्तस्यनित्यानित्यविवेकिनः ॥
आश्चर्यंमोक्षकामस्यमोक्षादेवविभीषिका॥८॥

इहामुत्रविरक्तस्येति ऐहिकामुष्मिकभोगविरक्तस्यनित्यमात्मतत्वमनित्यंशरीरादिकंतद्विवेकिनोमोक्षःसच्चिदानंदस्तत्रकामोंतःकरणंयस्यएवंविधस्यज्ञानिनोपिमोक्षादेवअसद्रूपतनुधनवियोगादेवविभीषिकाभयंदृश्यतेइति आश्चर्यंनहिस्वप्नदृष्टतनुधननाशेपिजाग्रतांभयंकापिदृष्टमितिभावः॥८॥ ॥ ॥

धीरस्तु भोज्यमानोपिपीड्यमानोपिसर्वदा ॥
आत्मानंकेवलंपश्यन्नतुष्यतिनकुप्यति॥९॥

एवमाक्षेपमुद्भाव्यापूर्वमुक्तं। अथज्ञानिनस्तोषरोषावनुचितावितिकुतो निरूपयति। धीरइति धीरोज्ञानी। लोकैर्विषयान्भोज्यमानोपितथानिंदादिनापीड्यमानोपिसर्वदा आत्मानंकेवलंसुखदुःखभोगादिरहितंपश्यन्नतुष्यतिनकुप्यति।तोषरोषहेतूनांकेवलात्मनिअसंभवज्ञानादितिभावः॥९॥

चेष्टमानंशरीरंस्वंपश्यत्यन्यशरीरवत् ॥
संस्तवेचापिनिंदायांकथंक्षुभ्येन्महाशयः॥१०॥

किंचतोषरोषहेतूनांस्तुतिनिंदादीनांशरीरधर्मत्वाच्छरीरस्यचात्मभिन्नत्वेनानुसंधानात्कथंज्ञानिनस्तोषरोषावित्याह॥ चेष्टमानमिति। स्वंशरीरंस्वात्मभिन्नंचेष्टाश्रयत्वादन्यशरीरवदितियःपश्यतिमहाशयःसंस्तवेस्तुतावपिचनिंदायांकथंक्षुभ्येत्कथंतोषरोषरूपांविक्रियांव्रजेदित्याक्षेपः॥१०॥

मायामात्रमिदंविश्वंपश्यन्विगतकौतुकः॥
अपिसंनिहितेमृत्यौकथंत्रस्यतिधीरधीः॥११॥

मार्यमारकयोरनित्यत्वानुसंधानात्संनिहितेपिमृत्यौज्ञानानिनत्रासःकथमित्याह।मायामात्रमिति। इदंदृश्यमानंविश्वंमार्य्यमारकादिरूपंसमग्रंमायामात्रमसत्स्वरूपंपश्य तएवकुतइदंशरीरादिकंजायते।कुत्रविलयंयास्येवंरूपःकौतुकरहितस्तथाधीरात्स्वरूपादचलाधीर्यस्यससंनिहितेमृत्यौसत्यपिकथंत्रस्यतीत्याक्षेपः॥११॥

निःस्पृहंमानसंयस्यनैराश्येपिमहात्मनः॥ ॥११॥
तस्यात्मज्ञानतृप्तस्यतुलनाकेनजायते॥१२॥

सर्वेषामाक्षेपाणांसमर्थनार्थंज्ञानिनोनिरूपमत्वमाह।निस्पृहमिति।यस्यनैराश्येमोक्षेपिमानसंनिःस्पृहंतस्यात्मज्ञानतृप्तस्यब्रह्माहमस्मीतिजानतःसमाप्तसर्वमनोरथस्यकेनसमंतुलनाजायतेनकेनापीत्यर्थः॥१२॥

+ स्वभावादेवजानानोदृश्यमेतन्नकिंचन ॥

इदंग्राह्यमिदंत्याज्यमसकिंपश्यतिधीरधीः॥१३॥

ज्ञानिनःहानोपादानादिव्यवहारमाक्षिपति। स्वभावादिति। प्रपंचो मिथ्यादृश्यत्वात्शुक्तिकारजतवदित्यनुमानादेतदृश्यंनकिंचननसन्नाप्यसदितिजानानोनिष्प्रपवान्योधीरधीःसइदंग्राह्यमिदंत्याज्यमिति कथंपश्यतीत्याक्षेपः॥१३॥

अंतस्त्यक्तकषायस्यनिर्द्वंद्वस्यनिराशिषः॥यदृच्छयागतोभोगो नदुःखायनतुष्टये॥१४॥ इत्याक्षेपद्वारोपदेशचतुर्दशकं॥

अत्रहेतुमाह अंतस्त्यक्तेति अंतःकरणात्यक्ताःकषायाःविषयवासनायेनतस्यनिर्द्वंद्वस्यशीतोष्णादिसमचित्तस्यअतएवनिराशिषःनिषयवासनाविहीनस्ययदृच्छयादैवयोगादागतःप्राप्तोभोगःभुज्यमानो विषयोदुःखायनभवति। तुष्टयेचनभवति॥१४॥ इतिश्रीविश्वेश्वरविरचितायांअष्टावक्रटीकायामाक्षेपद्वारोपदेशकंनामत्रतीयप्रकरणं॥३॥

हंतात्मज्ञस्यधीरस्यखेलतोभोगलीलया॥

नहिसंसारवाहीकैर्मूढैःसहसमानता॥१॥

गुरुणैवमुपाक्षिप्तःशिष्योज्ञानदृशोल्लसन्। ज्ञानिन्यशेषचेष्टानां स्पष्टमाचष्टसंभवं॥१॥ एवंतावद्गुरुणापरीक्षार्थमाक्षिप्तःप्रारब्धवशाद्बाधितानुवृत्याज्ञानिन्यपिसर्वव्यवहाराणामुपपत्तिमात्मज्ञानोल्लासवशादेवाह। षड्भिःश्लोकैः। हंतेति हंतेत्यात्मज्ञानोल्लसितेहर्षेहेगुरोआत्मज्ञस्यसर्वाधिष्ठानभूतमात्मानंजानतःअतएवधीरस्यविषयैरविक्षिप्तचित्तस्यभोगलीलयाविषयभोगादिरूपयालीलयाक्रीडयाप्रारब्धवशात्प्रवृत्तयाखेलतःक्रीडतःसंसारवाहीकैःसंसारवृत्तिपशुभिर्मूढैर्देहाद्यात्मवेदिभिःसहनहिसमानता नैवतुल्यत्वं। तदुक्तंभगवता। तत्ववित्तुमहाबाहोगुणकर्मविभागयोः।गुणागुणेषुवर्त्तंतइतिमत्वा नसज्जते॥१॥

यत्पदंप्रेप्सवोदीनाःशक्राद्याःसर्वदेवताः॥

अहोतत्रस्थितोयोगीनहर्षमुपगच्छति॥२॥

ननुसंसारव्यवहारस्थोज्ञानीकथंनसंसारीतुल्यइत्याशंक्य हर्षादिरहितत्वात्तस्यवैलक्षण्यमाह। यत्पदमिति। अहोइतिसं

बोधनंहेगुरो। यद्वा अहो आश्चर्यं। शक्राद्याः सर्वदेवता अपि यत्प दंप्रेप्सवः यत्पदं प्राप्तुमि च्छंतो दीनास्तदप्राप्तितः शोच्या वर्त्तते त त्र सच्चिदानंदाख्ये पदे स्थितस्तत्त्वंपदार्थैक्यज्ञानात त्र वर्त्तमानो योगी लब्धसाक्षात्कारो विषयभोगान्न हर्षं प्राप्नोति। नापि तदपगमा द्दुःखितो भवतीत्यर्थः॥ २॥

तज्ज्ञस्य पुण्यपापाभ्यां स्पर्शो ह्यंतर्न जायते॥
नह्याकाशस्य धूमेन दृश्यमानापि संगतिः॥ ३॥

तत्वज्ञस्य विध्यकिंकरत्वं वक्तुं पुण्याद्यसंस्पर्शमाह तत् ज्ञस्येति। तत्त्वंपदार्थैक्याभिज्ञस्य पुण्यपापाभ्यां सह अंतःकरणधर्माणां स्प र्शः संबंधो न जायते ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथे ति स्मृतेः। अत्र दृष्टांतमाह नहीति यथाहि। आकाशस्य धूमेन सह दृश्यमानापि संगतिर्नास्ति। तथात्मज्ञस्य न पुण्यादिसंगतिरित्यर्थः ॥३॥

आत्मैवेदं जगत्सर्वं ज्ञातं येन महात्मना॥
यदृच्छया वर्त्तमानं तं निषेद्धुं क्षमो न कः॥ ४॥

ननु कर्मणि कृते कथं न पुण्यादिस्पर्श इत्याशंक्य। ज्ञानिनो विधि निषेधानियम्यत्वमाह। आत्मैवेति। येन महात्मना इदं दृश्यमानं स र्वं जगदात्मैवेति ज्ञातं तं ज्ञानिनं यदृच्छया प्रारब्धवशादेव वर्त्तमानं को वचः कलापो निषेद्धुं प्रवर्तयितुं वा क्षमः समर्थो न कोपीत्यर्थः॥ तदुक्तं शारीरकभाष्ये अविद्यावद्विषयो वेद इति। प्रबोधनी यएं वासे सुन्नीएजे वंबंदिमिरितिस्मृतिरपि॥ ४ ॥

आब्रह्मस्तंबपर्यंते भूतग्रामे चतुर्विधे॥ ॥
विज्ञस्यैव हि सामर्थ्यमिच्छानिच्छाविवर्जने॥ ५॥

ननु ज्ञानिनोपि न यदृच्छया प्रवर्त्तते किं त्विच्छानिच्छयोर्विवर्ज्जयि तुमशक्यत्वादित्याशंक्याह। आब्रह्मेति। यद्यपि ब्रह्माणमारभ्य स्तं बपर्यंतैरिच्छानिच्छे विवर्जयितुमशक्ये तथापि विज्ञस्यैवेच्छाद्वेष निवर्त्तने सामर्थ्यमतो यदृच्छया प्रवर्त्तमानो ज्ञानी न विधिनिषेध नियम्य इत्यर्थः॥ ५॥

+ आत्मानमद्वयं कश्चिज्ज्ञानाति जगदीश्वरं॥ यद्वेत्ति

त त्सकुरुते न भयं तस्य कुत्रचित् ॥ ६ ॥ इत्युल्लासषट्कं ॥
अद्वैतज्ञानेन द्वितीयस्य बाधितत्वात् ज्ञानिनां भयहेतुः कोपि नास्तीत्युपसंहरति। आत्मानमिति। ॥ कश्चित्सहस्रेषु एकः एव जगदीश्वरं तत्पदार्थं आत्मानं त्वंपदार्थं अद्वयमभिन्नतां जानाति स्म यद्वेत्ति प्रारब्धवशाद्बाधितानुवृत्त्येदं कर्तव्यमिति मन्यते तत्क रोति। एवं कुर्वंस्तस्य कुत्रचिदिह वामुत्र वा भयं नास्ति भयहेतोर् द्वैतज्ञानबाधिततत्वादिति भावः॥ ६॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां शिष्यप्रोक्तानुभवोल्लासषट्कं चतुर्थं प्रकरणं ४

न ते संगोस्ति केनापि किं शुद्धस्त्यक्तुमिच्छसि ॥
संघातविलयं कुर्वन्नेवमेव लयं व्रज ॥ १ ॥

एवमुल्लासषट्केन स्वशिष्येपि परिक्षिते। गुरुर्दृढोपदेशार्थं लययोगमथाब्रवीत् ॥ १॥ एवमुल्लासषट्केन स्वशिष्ये परिक्षिते सति पुनर्दृढोपदेशार्थमाचार्यो लयमुपदिशति श्लोकचतुष्टयेन नतेइति ॥ हे शिष्य शुद्धबुद्धस्वभावस्य तव केनापि देहगेहादिनाहंकारममकारास्पदेन न संगोस्ति अतः शुद्धोऽसंगस्त्वं किं त्यक्तुं किमुपादातुं चेच्छसि तस्मात् संघातस्य देहस्य विलयं कुर्वन्नाहं देह इति निरसनं कुर्वन्नेवमेव देहादिनिरसनरूपमेव लयं व्रज ॥ १ ॥

उदेति भवतो विश्वं वारिधेरिव बुद्बुदः ॥
इति ज्ञात्वैकमात्मानमेवमेव लयं व्रज ॥ २ ॥

उदेतीति। हे शिष्य भवतः सकाशाद्विश्वमुदेति भवदभिन्नमेव यथा वारिधेः सकाशात् बुद्बुदो वारिधेरभिन्न एवोदेति इत्येवं प्रकारेण एकं सजातीयादिभेदरहितमात्मानं ज्ञात्वा एवमेवैकात्मज्ञानमेव लयं व्रज ॥ २ ॥

प्रत्यक्षमप्यवस्तुत्वाद्विश्वं नास्त्यमले त्वयि ॥
रज्जुसर्प इव व्यक्तमेवमेव लयं व्रज ॥ ३ ॥

ननु प्रत्यक्षतो भिन्नतया हारसर्पादिभेदे प्रतीयमाने कथं हारादि विलय इत्यत आह ॥ प्रत्यक्षमिति। प्रत्यक्षमपि व्यक्तं दृश्यं विश्वममले त्वयि नास्त्येव। अवस्तुत्वात् रज्जुभुजंगवत् तस्मादेवमेव लयं व्रज द्वितीयस्य हेयोपादेयस्यैवाभावादित्यर्थः ॥ ३ ॥

समदुःखसुखः पूर्णआशानैराश्ययोःसमः॥ समजीवि
तमृत्युःसन्नेवमेवलयंव्रज॥४॥ इतिलयचतुष्कं ॥

समेति॥पूर्णआत्मानंदपूर्णस्त्वमतएवदैववशादुद्भूतयोःसुखदुः
खयोःसमःआशानैराश्ययोश्चसमस्तथाजीवितेमृत्यौवासमःनिर्वि
कारःसुखदुःखादीनामनात्मधर्माणांतुच्छत्वानुसंधानात्त्वंसुखदुःखा
दिषुसमःब्रह्मदृष्टिरूपंलयंव्रजेत्यर्थः॥४॥ इतिश्रीमद्दिग्वंम्बरविर
चितायामष्टावक्रटीकायांआचार्यैणोक्तलयचतुष्टयंनामपंचमंप्रकर

आकाशवदनंतोहंघटवत्प्राकृतंजगत्॥ णं॥५

इतिज्ञानंतथैतस्यनत्यागोनग्रहोलयः॥१॥

गुरुणैवंपरीक्षार्थमुपदिष्टेलयेसति।पूर्णात्मनोलयादीनांशिष्योसं
भवमब्रवीत्॥१॥तदेवंगुरुणास्वंतपरीक्षार्थंलययोगेसमुपदिष्टेसतिल
याद्यभावोपपादकमात्मज्ञानमनुवदन्नेवशिष्यःपूर्णात्मनोलया
द्यसंभवमाहचतुर्भिःश्लोकैःआकाशवदिति।अहमात्माकाशवदनं
तःनन्वनंतस्यात्मनोदेहादिनिवासःकथमित्यतआह।घटवदिति
।प्राकृतंप्रकृतिकार्य्यंजगद्देहादिकं।घटव यथाघटआकाशस्याव
च्छेदकोनिवासस्थानंचतथात्मनोदेहादिरेकदेशावच्छेदकएवव्योम्न
इवघटादिरित्यर्थः।अत्रप्रमाणमाह।इतीति।इत्येवंवेदांतसिद्धंज्ञा
नमनुभवरूपमत्रप्रमाणमतोनान्यथाभावशंकेत्यर्थः।तथेति।त
थास्यात्मनोनंतत्वेसत्येतस्यात्मनस्त्यागोग्रहणलयश्चनसंभव
तिपरिच्छिन्नस्यैवघटादेस्त्यागादिदर्शनादित्यर्थः॥१॥

महोदधिरिवाहंस प्रपंचोवीचिसंनिभः॥

इतिज्ञानंतथैतस्यनत्यागोनग्रहोलयः॥२॥

घटाकाशदृष्टांतेदेहात्मनोर्भेदशंकास्यादित्यपरितोषादाह।महो
दधिरितिस्पष्टम्॥२॥

अहंसशुक्तिसंकाशोरूप्यवद्विश्वकल्पना ॥

इतिज्ञानंतथैतस्यनत्यागोनग्रहोलयः॥३॥

समुद्रवीचिदृष्टांतेदेहात्मनोर्विकारविकारिशंकास्यादित्यपरितो
षादाह।अहंसइतिस्पष्टं।३।शुक्तिकादृष्टांतेप्यात्मनिप्रतीकिन्नत्वशंका

स्यात्तद्वारणार्थमाह ॥ ३ ॥

अहंवासर्वभूतेषुसर्वभूतान्यथोमयि॥ इतिज्ञानंत
थैतस्यनत्यागोनग्रहोलयः॥४॥ उत्तरोपदेशचतुष्कं॥

अहमिति। अहंवा। अहमेवसर्वभूतेषु प्रकृतिप्राकृतिकेषुसत्तास्फू
र्त्यादिप्रदत्वेनास्मि। अथोतोहेतोः सर्वभूतान्यधिष्ठानभूतेमयिवर्त्त
ते इतिज्ञानंवेदांतसिद्धंतथासत्यात्मनस्त्यागादिकंनसंभवतीत्यर्थः
॥४॥ इतिश्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायांशिष्यप्रोक्तमु
त्तरचतुष्टयंनामषष्ठंप्रकरणं ॥ ६ ॥

मय्यनंतमहांभोधौ विश्वपोतइतस्ततः ॥
भ्रमतिस्वांतवातेन ममनास्त्यसहिष्णुता॥१॥

लययोगानुष्ठानेव्यवहारंनिरंकुशं। आशंक्यशिष्यस्वोल्लासादव्र
वीद्गुरूत्तरं॥१॥ ननुलययोगाभावेसंसारविक्षेपोनिरंकुशप्रसरःस्या
दित्याशंक्यतस्यानिष्टत्वाभावमनुभवन्ननुभवपंचकेनोत्तरमाह॥ म
यीति। मय्यात्मन्यनंतेचसमुद्रेविश्वाख्यःपोतःनौकास्वांतवातेनमनः
पवनेनइतस्ततोभ्रमति। अत्रममासहिष्णुताअसहनशीलतानास्ति
।समुद्रस्येवनौकापरिभ्रमणइत्यर्थः॥१॥

मय्यनंतमहांभोधौजगद्वीचिः स्वभावतः ॥
उदेतुवास्तमायातुनमेवृद्धिर्नचक्षतिः॥ २ ॥

जगद्व्यवहारस्यानिष्टत्वाभावःपूर्वमुक्तःअथजगदुदयापगम यो
रपिनानिष्टतेत्याह। मयीति। आत्मनि। अनंतेविनाशरहितेमहतिव्या
पकेंभोधौसमुद्रेजगदाख्यावीचिःस्वभावतःदृश्यत्वादिभावादुदेतुवा
परमस्तमायातुममतदुदयेवृद्धिर्नास्तिव्यापकत्वात्तदपगमेचक्षति
र्नास्तिअनंतत्वादित्यर्थः॥२॥

मय्यनंतमहांभोधौविश्वंनामविकल्पना ॥
अतिशांतोनिराकारएतदेवाहमास्थितः॥३॥

पूर्वदृष्टांतेनस्वात्मनःजगद्विकारइतिभ्रमःपरिणामित्वंस्यात्तद्वा
रणार्थमाह। मयीति मय्यनंतमहांभोधौनामप्रसिद्धंविश्वंकल्पनाभ्र
ममात्रमेवनतुतात्विकंअंतःकारणात अहमतिशांतःप्रपंचोपप्लव

एहितः।अत्रहेतुमाह।निराकारइति।एतदात्मज्ञानमेवअहमास्थि
तः।आश्रितोनतुलययोगंतस्यपूर्वमेवदूषितत्वात्॥३॥

नात्माभावेषुनोभावस्तत्रानंतेनिरंजने॥ ॥
इत्यसक्तोऽस्पृहःशांतएतदेवाहमास्थितः४॥

अतिशांतत्वमेवस्पष्टयति।नात्मेति।आत्माभावेषुदेहादिषुआधे
यतयानास्तिव्यापकत्वात्।भावोदेहादिस्तत्रात्मनिनास्तिअनंतेनिरं
जनेसतिइतिकारणादहमसक्तःसंसर्गरहितोऽतएवास्पृहइच्छादिध
र्मासंश्लिष्टोऽतएवशांतइत्यर्थः॥४॥

अहोचिन्मात्रमेवाहमिंद्रजालोपमंजगत्॥
अतोममकथंकुत्रहेयोपादेयकल्पना॥५॥
इत्यनुभवपंचकंप्रकरणंसप्तमम्॥७॥ ॥ ॥

इच्छादिरहितत्वेहेतुंतमाहअहोइति।अहोइत्याश्चर्येमलौकि
कंचिन्मात्रंचैतन्यमात्रमेवाहंजगत्सर्वप्रपंचजातंइंद्रजालोपमंद
र्शनकालेपिपृथक्सत्तारहितमस्यविश्वस्यपृथक्सत्तारहितत्वा
न्ममकुत्रवस्तुनिकथंकेनप्रकारेणहेयोपादेयबुद्धिःस्यान्नकुत्रा
पीत्यर्थः॥५॥ इतिश्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकाया
मनुभवपंचकविवरणंसप्तमंप्रकरणं॥

तदाबंधोयदाचित्तंकिंचिद्वांछतिशोचति॥
किंचिन्मुंचतिगृण्हातिकिंचित्हृष्यतिकुप्यति॥१

इत्थंपरिक्षितज्ञानंशिष्यमेवाभिनंदितुंगुरुर्बंधस्यमोक्षस्यव्य
वस्थांसम्यग्ब्रवीत्॥१॥ तदेवंषड्भिःप्रकरणैःस्वशिष्यंसम्यक्प
रीक्ष्यबंधमोक्षव्यवस्थानिरूपणव्याजेनगुरुःस्वशिष्यानुभवमभि
नंदतिचतुर्भिःश्लोकैःतदेति।हेशिष्य।अतोममकथंकुत्रहेयो
पादेयकल्पनेत्वंतंयत्त्वयोक्तंतत्तथैवयतश्चित्तंयदाविषयवां
छादिविकारवद्भवतितदैवंजीवस्यबंधइत्यर्थः॥१॥

तदामुक्तिर्यदाचित्तंनवांछतिनशोचति॥
नमुंचतिनगृह्णातिनहृष्यतिनकुप्यति॥२॥

तदामुक्तिरिति।यदाचित्तंवांछादिविकारातीतंतदामुक्तिरित्स

तदाबंधोयदाचित्तंसक्तंकास्वपिदृष्टिषु ॥
तदामोक्षोयदाचित्तमसक्तं सर्वदृष्टिषु॥ ३॥

तदेवंपृथक्बंधमोक्षावुक्तौ अथसमुच्चयेनबंधमोक्षावाह। तदाबंधइति।यदाचित्तंकास्वप्यन्यासदृष्टिषुसंसक्तंतदाबंधः।यदाचित्तंसर्वास्वपिविषयदृष्टिषुसंसक्तंनभवति।तदामोक्षइत्यर्थः॥३॥

यदानाहंतदामोक्षोयदाहंबंधनंतदा ॥ ॥
मत्वेतिहेलयाकिंचिन्मागृहाणविमुंचमा॥४॥

इत्यष्टावक्रबंधमोक्षचतुष्कमष्टमम् ॥

अस्तुवाबाधितानुवृत्यादग्धपटोपमानासर्वापिविषयदृष्टिर्बंधहेतुस्तन्निवृत्तौमोक्षइतिपूर्वमुक्तंतथाप्यहंकारनिवृत्तौमोक्षस्तदनिवृत्तौबंधइतिवदन्नेवशिष्योक्तमर्थमभिनंदितुमनुवदति॥यदानाहमिति।यदाहमित्येवंरूपःप्रथमोध्यासोनर्थमूलभूतोनिवर्त्ततेतदामोक्षःयदाचसोनुवर्त्ततेतदाबंधनमिति ज्ञात्वाहेलयाअनायासेनैवहानोपादानादिक्रियाणामकर्त्तास्मिअकर्त्रात्मज्ञानेनकर्त्तृत्वाभिमानोनिवर्त्ततइतिभावः॥४॥ इतिश्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायांगुरुप्रोक्तबंधमोक्षव्यवस्थाष्टमंप्रकरणं ॥८॥

कृताकृतेचद्वंद्वानिकदाशांतानिकस्यवा ॥
एवंज्ञात्वेहनिर्वेदाद्भवत्यागपरोऽव्रती॥१॥

शिष्योक्तानुभवस्यैवदार्ढ्यार्थंगुरुणोच्यते।निर्वेदःस्वष्टमष्टाभिरिष्टादित्यजनात्मकः॥१॥मत्वेति हेलयाकिंचिन्मागृहाणेतियदुक्तंतत्रकिंद्वारमित्यपेक्षायांगुरुरनुमोदनप्रवृत्त्यावैराग्याष्टकमाह।कृतेति।कृताकृते इदंकर्त्तव्यमिदमकर्त्तव्यमित्यभिनिवेशेद्वंद्वानिसुखदुःखादीनिकस्यकदावाशांतानिनिवृत्तानि अपितुनकस्यापिकदापिशांतानीत्यर्थः।एवंज्ञात्वाइहकृतादिषुनिर्वेदादभिनिवेशादिपरित्यागादेवत्यागपरोभव।कीदृशस्त्वमव्रती।नास्तिव्रतंकुत्रापिआग्रहोयस्यसः॥१॥

कस्यापितातधन्यस्यलोकचेष्टावलोकनात् ॥
जीवितेच्छाबुभुक्षाचबुभुत्सोपशमंगताः॥२॥

चित्तधर्मत्यागरूपोनिर्वेदस्तुकस्यचिदेवस्यान्नतुसर्वस्येत्याह॥
कस्यापीति। हेतातशिष्यसहस्रेषुमध्येकस्यचिदेवधन्यस्योत्पत्ति
विनाशरूपलोकचेष्टावलोकनात्जीवितेच्छाभोगेच्छाज्ञानेच्छादयउपश
मंगताः। इदंतुतादृशनिर्वेदसंपन्नंशिष्यमभिनंदितुमेवोच्यते
। नतूपदिश्यते इतिप्रागुक्तमेव॥२॥

अनित्यंसर्वमेवेदंतापत्रितयदूषितम्॥
असारंनिंदितंहेयमितिनिश्चित्यशाम्यति॥३॥

ननुज्ञानिनांसर्वेच्छोपशमःकिंहेतुकइत्यतआह। अनित्यमि
ति। इदंदृश्यमानंसर्वप्रपंचजातमनित्यंचैतन्येभ्यस्तत्वात्पृथक्
सत्वेनगृह्यमाणंसत्। आध्यात्मिकाधिदैविकाधिभौतिकतापत्रय
दूषितं॥ अतएवासारंतुच्छमतएवहेयंपृथक्सत्तयानैवादरणीयमि
तिनिश्चित्यज्ञानीशाम्यति। कुत्रापिइच्छांनकुरुते॥३॥

कोसौकालोवयःकिंवायत्रद्वंद्वानिनोनृणाम्॥
तान्युपेक्ष्ययथाप्राप्तवर्तीसिद्धिमवाप्नुयात्॥४॥

द्वंद्वानांप्रारब्धकर्मवशादवश्यभावित्वात् तत्रेच्छानिच्छेविहा
ययथाप्राप्तभोगीमुक्तिमवाप्नुयादित्याहकोसाविति। यत्रनृणांद्वं
द्वानिसुखदुःखादीनिनसंत्यसौकःकालः। कावाबाल्यादिवयोलक्ष
णाशरीरावस्थापितुनकापीतिविचार्यतानिद्वंद्वान्युपेक्ष्यतत्रेच्छा
मकृत्वायथाप्राप्तेषुनासक्तःतथावर्तीसिद्धिंमुक्तिमवाप्नुयादित्यर्थः

नानामतंमहर्षीणांसाधूनांयोगिनांतथा॥ ॥४॥
दृष्ट्वानिर्वेदमापन्नःकोनशाम्यतिमानवः॥५॥

तर्कशास्त्रादिज्ञानेषुनिष्ठानकर्तव्यानानाविप्रतिपत्तिग्रस्तत्वा
त् नापिकर्मसुनाप्यष्टांगयोगादिष्वित्याह। नानामतमिति। महर्षी
णांगौतमजैमिनिप्रभृतीनांमतंनानाविधंपरिछिन्नंदृष्ट्वातर्कशास्त्रा
दिभ्योनिर्वेदंआपन्नस्तथासाधूनांकर्मनिष्ठानांमतंनानाविधंके
चिद्धोमपराःकेचिज्जपपराः केचित्कृच्छ्रचांद्रायणादिपराइति
नानाविधंदृष्ट्वाकर्मभ्योपिनिर्वेदमापन्नस्तथायोगिनांमतंनाना
विधंके[illegible]नपराइतिनाना

विधं दृष्ट्वा अष्टांगयोगादिभ्योपि निर्वेदमापन्नः केवलमात्मानुसंधान
निष्ठः कोनशाम्यति कः सुखं न प्राप्नोतीत्यर्थः ॥ ५ ॥

कृत्वामूर्तिपरिज्ञानं चैतन्यस्य न किं गुरुः ॥
निर्वेदसमतायुक्त्या यस्तारयति संसृतेः ॥ ६ ॥

केवलज्ञाननिष्ठामेवाश्रित्य कर्मादिकं माकुर्वित्याह ॥ कृत्वेति ॥ नि
र्वेदसमतायुक्त्या निर्वेदो नाम विषयानासक्तिस्तथा शत्रुमित्रेषु सम
ता सर्वत्रात्मबुद्धिर्युक्तिर्नाम श्रुत्यनुग्राहकस्तर्कः एतैश्चैतन्यस्य सच्चि
दानंदस्य मूर्तिपरिज्ञानं स्वरूपसाक्षात्कारं कृत्वा तदनंतरं नास्ति क
श्चिद्गुरुर्यस्य स न किं गुरुः एवंविधो यः संसृतेः सकाशादात्मानं तारय
ति ॥ ६ ॥

पश्य भूतविकारांस्त्वं भूतमात्रान्यथार्थतः ॥
तत्क्षणाद्बंधनिर्मुक्तः स्वरूपस्थो भविष्यसि ॥ ७ ॥

चेतनस्य स्वस्वरूपज्ञानोपायमाह । पश्येति । हे शिष्य । भूतविका
रान् देहेंद्रियादीन् यथार्थतस्त्वं भूतमात्रान् पश्य न तु आत्मस्व
रूपान् एवं सति त्वं तत्क्षणाद्बंधनिर्मुक्तः शरीराहंभावनिर्मुक्तः स्या
न् शरीरादिविविक्तात्मस्वरूपस्थो भविष्यसि । शरीरादावनात्मत्वे
ज्ञाते सति तत्साक्षीभूत आत्मा झटिति स्फुरेदित्यर्थः इति भावः ॥ ७ ॥

वासना एव संसार इति सर्वा विमुंच ताः ॥ तत्त्यागो वा
सनात्यागात्स्थितिरद्य यथा तथा ॥ ८ ॥ निर्वेदाष्टकं प्रकरणं ।

नन्वेवमात्मनि ज्ञातेपि तन्निष्ठा कथं स्यादित्याशंक्य । वासनात्या
गादित्याह वासना इति । वासनाविषयवासना एव संसार इति कारण
त् ताः वासनास्त्वं विमुंच वासनात्यागाच्चात्मनिष्ठायां सत्यां तस्य संसा
रस्य त्याग इत्यर्थः । अद्य अधुना वासनात्यागे सति स्थितिर्यथा त
था यथाप्रारब्धं तथैवेत्यर्थः ॥ ८ ॥ इति श्रीमहेश्वरविरचितायां
अष्टावक्रटीकायां गुरुप्रोक्तनिर्वेदाष्टकं नवमं प्रकरणं ॥

विहाय वैरिणं काममर्थं चानर्थसंकुलं ॥
धर्ममप्येतयोर्हेतुं सर्वत्रानादरं कुरु ॥ १ ॥

विषयाणामभावेपि तुष्टिर्निर्वेद ईरितः तत्सिध्यर्थं च विषयेषु वै
तृष्ण्यं शांतिरीर्यते । विषयैर्विनापि संतोषरूपो निर्वेदः प्रागुक्तः ॥

अथेदानीं विषयत्यागोपशममभिनंदनसुद्धपागुरुरुदाहरति। विहायेति। कामं वैरिणं ज्ञानशत्रुं विहाय तथा नर्थसंकुलमर्जनेरक्षणोपयेवानेकशोकदुःखसंकुलमर्थं विहाय॥ तथा एतयोः कामार्थयोः ———— अनर्थयोर्हेतुं धर्ममपि विहाय सर्वत्र त्रिवर्गहेतुकर्मस्वनादरमुपेक्षां कुरु॥१॥

स्वप्नेंद्रजालवत्पश्य दिनानि त्रीणि पंच वा॥
मित्रक्षेत्रधनागारदारदायादिसंपदः॥२॥

ननु मित्रक्षेत्रादिफलकेषु कर्मसु कथमनादरं इत्याशंक्य मित्रादीनामनित्यत्वमाह। स्वप्नेति॥ हे शिष्य मित्रादिसंपदः स्वप्नेंद्रजालवत्पश्य यतो दिनानि त्रीणि पंच वा स्थायिन्य इत्यर्थः॥२॥

यत्र यत्र भवेत्तृष्णा संसारं विद्धि तत्र वै॥
प्रौढवैराग्यमाश्रित्य वीततृष्णः सुखी भव॥३॥

सर्वत्रानादरं कुर्वित्यनेनोक्तं वैतृष्ण्यं पुरुषार्थहेतुरित्याह यत्र यत्रेति यत्र यत्र येषु प्रसिद्धेषु विषयेषु तृष्णा भवेत्तत्र तत्र तमेव संसारं विद्धि विषयतृष्णाया एव कर्मद्वारा संसारहेतुत्वात् अतः प्रौढवैराग्यं प्राप्तेष्वर्थेष्वप्रीत्यभावमाश्रित्य वीततृष्णः अप्राप्तार्थेच्छारहितः सन्नात्मनिष्ठया सुखी भवेत्यर्थः॥३॥

तृष्णामात्रात्मको बंधस्तन्नाशो मोक्ष उच्यते॥
भवासंसक्तिमात्रेण प्राप्तितुष्टिर्मुहुर्मुहुः॥४॥

अमुमेवार्थं भंग्यंतरेणाह॥ तृष्णामात्रेति। तृष्णामात्रस्वरूप एव बंधः। कर्मवासनाद्वारा बंधहेतुत्वात्तन्नाशस्तृष्णानाश एव मोक्षो निवृत्तिहेतुत्वात्। तन्नाशो मोक्ष इत्यत्र हेतुमाह। भवेति भवतीति भवो देहादिविषयस्तत्र देहादिविषये संगाभावमात्रेण मुहुर्मुहुः वारं वारं प्राप्तितुष्टिः। आत्मप्राप्तिजः संतोषः स्यात्ततः तृष्णापगमे मोक्ष इत्यर्थः। प्राप्तितुष्टिरिति पाठे प्राप्तिः स्यात्तृष्णिस्यादित्यर्थः॥४॥

त्वमेकश्चेतनः शुद्धो जडं विश्वमसत्तथा॥
अविद्यापि न किंचित्सा का बुभुत्सा तथापि ते॥५॥

ननु बुभुत्सारूपात्त्वाकथं त्याज्येत्याशंक्याह। त्वमेक इति। इह जगति त्रय एव पदार्थाः आत्मा जगदविद्या च तत्र आत्मा तावत्त्वमेवैकश्चेतनः शुद्धो नतु चिद्भिन्न इति स्वात्मानमेवैकं पूर्णं जानीहि। नान्या पुनरात्मबुभुत्सा युक्ता नापि जगद्बुभुत्सा जगतः असत्वाज्जडत्वाच्च नापि अविद्याबुभुत्सा युक्ता तस्यापि सदसद्विलक्षणरूपतया निर्वचनीयत्वात्। तथा च। तत्त्वबुभुत्सापि का युक्ता न कापि इत्यर्थः॥५॥

राज्यं सुताः कलत्राणि शरीराणि सुखानि च॥
संसक्तस्यापि नष्टानि तव जन्मनि जन्मनि॥६॥

जडं विश्वमसदित्युक्तं तद्विशदयति। राज्यमिति। राज्यादीनि सर्वाणि संसक्तस्याप्यासक्तिं कुर्वाणस्यापि तव जन्मनि जन्मनि नानाजन्मसु नष्टानीत्यतो विश्वमसदित्यर्थः॥६॥

अलमर्थेन कामेन सुकृतेनापि कर्मणा॥
एभ्यः संसारकांतारे न विश्रांतमभून्मनः॥७॥

बुभुत्सापि न कर्तव्येति प्रागुक्तं अथ धर्मार्थकामेष्वपीच्छा न कार्येत्याह। अलमिति अर्थादिना अलमर्थधर्मकामेषु इच्छा न कार्येत्यर्थः। अत्र हेतुमाह। एभ्य इति। यतः कारणात् संसारकांतारे संसारलक्षणे दुर्गमे वर्त्मनि भ्राम्यतस्तव एभ्यः धर्मकामार्थेभ्यः विश्रांतिर्भ्रमणविच्छेदो नाभूदतो अर्थादिषु नत्वस्या कर्तव्येत्यर्थः॥७॥

कृतं न कति जन्मानि कायेन मनसा गिरा॥
दुःखमायासदं कर्म तदद्याप्युपरम्यतां॥८॥
इत्युपशमाष्टकं दशमप्रकरणम्॥

तत्त्वसापाउपशमः प्रागुक्तः। अथ क्रियामात्रोपशममाह कृतमिति। हे शिष्य। आयासदं प्रयासदं अतएव दुःखदं कर्म कायादिना कति जन्मानि न कृतमपि तु यावदद्य प्राचीनसर्वजन्मस्वपि कृतं कर्मणा तुल्यया नर्थ एवलब्धस्तस्माद्द्यापि अधुनापि कर्मभ्य उपरम्यतां॥८॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां गुरुप्रोक्तमुपशमाष्टकं दशमप्रकरणं॥१०॥

भावाभावविकारश्च स्वभावादिति निश्चयी॥

निर्विकारो गतक्लेशः सुखेनैवोपशाम्यति ॥१॥

उक्ता शांतिर्नविज्ञानं विना कस्यापि जायते इति निश्चेतु मेवाष्टगुरुज्ञानामृताष्टकं ॥१॥ उक्ता शांतिर्विज्ञानादेवस्मान्नत्वन्यथेति बोधयितुं ज्ञानाष्टकमाह। तत्रादौ ज्ञानसाधनान्याह। भावेति। भावाभावरूपो विकारः स्वभावान्मायातत्संस्कारादेव जायते॥ नतु निर्विकारादात्मन इति निश्चयवान् पुरुषो निश्चयबलादेव सुखेनानायासेनैवोपशाम्यति

ईश्वरः सर्वनिर्माता नेहान्य इति निश्चयी ॥ ॥१॥

अंतर्गलितसर्वाशः शांतः क्वापि न सज्जते॥२॥

ननु मायाया जडत्वात्तत एव कथं भावाभावविकार इत्याशंक्याह। ईश्वर इति। ईश्वर एव सर्वनिर्माता न त्वन्यो जीवः ईश्वरपरवशत्वादिति निश्चयी पुरुषो निश्चयवशादेवांतर्गलितसर्वाशः गतसर्वतृष्णः अत एव शांतो निश्चलचित्तः सन् क्वापि न सज्जते॥२॥

आपदः संपदः काले दैवादेवेति निश्चयी ॥

तृप्तः स्वस्थेंद्रियो नित्यं न वांछति न शोचति॥३॥

ननु ईश्वर एव चेत् सर्वनिर्माता तर्हि कांश्चिद्दरिद्रान् कांश्चित्तु धनिनस्तथा कांश्चित्सुखिनः कांश्चित् दुःखिनो रचयतस्तस्य वैषम्यनैर्घृण्ये स्यातामित्याशंक्याह। आपद इति। काले समयविशेषे आपदः संपदश्च दैवात् प्राक्तनादृष्टादेवेश्वरपरिपाचितादेवेति निश्चयी अत एव तृप्तो वीततृष्णः अत एव नित्यं स्वस्थेंद्रियो विषयानाकृष्टेंद्रिय अप्राप्तं न वांछति नष्टं न शोचतीत्यर्थः॥३॥

सुखदुःखे जन्ममृत्यू दैवादेवेति निश्चयी ॥

साध्यादर्शी निरायासः कुर्वन्नपि न लिप्यते॥४॥

ननूक्तनिश्चयवानपि कर्माणि कुर्वन्बध्यत इत्याशंक्याह सुखेति। कर्मफलभूते सुखादिके दैवाद्दैवादृष्टादेव इति निश्चयी अत एव एवं मया इदं फलं साध्यमित्यदर्शी अत एव निरायासः श्रमरहितः प्रारब्धवशात् कुर्वन्नपि न लिप्यते। कर्मजानर्थभागी न भवति कर्तृत्वाध्यासरहितत्वादित्यर्थः॥४॥

+ चिंतया जायते दुःखं नान्यथेहेति निश्चयी ॥

तयाहीनः सुखी शांतः सर्वत्रगलितस्पृहः ॥५॥

नतु कुर्वन् चेत्कथं निरायास इत्याशंक्याह। चिंतयेति। इष्टदुःखचिंतया जायते नान्यथेति निश्चयी अतएव च तया चिंतया हीनः अतएव शांतः स्थिरांतःकरणः अतएव सर्वत्र सुख तत्साधनयोर्गलितस्पृहः पुरुषः सुखी भवतीत्यर्थः ॥५॥

नाहं देहो न मे देहो बोधोहमिति निश्चयी ॥
कैवल्यमिव संप्राप्तो न स्मरत्यकृतं कृतं ॥६॥

उक्तसाधनैः सिद्धज्ञानिनां निजदशां निरूपयति। नाहमिति। अहं देहो न तथा मे देहो न किंतु नित्यबोधोहमिति ज्ञानवशाद्देहादौ निरहंममाभिमानः देहादीनां कृतमकृतं च मया कृतमिति न स्मरति ॥ यथा कैवल्यं विदेहकैवल्यं प्राप्य कृताकृतं न स्मरति तद्वदित्यर्थः ॥६॥

आब्रह्मस्तंबपर्यंतमहमेवेति निश्चयी ॥
निर्विकल्पः शुचिः शांतः प्राप्ताप्राप्तविनिर्वृतः ॥७॥

आब्रह्मेति। ब्रह्माणं हिरण्यगर्भमारभ्य तृणस्तंबपर्यंतं सर्वं जगदहमेवेति प्रत्यक्षनिश्चयवान् पुरुषः निर्विकल्पः संकल्पविकल्पशून्यः अतएव शुचिर्विषयासंगरूपमलरहित अतएव शांतो निश्चलांतःकरणः अतएव प्राप्ताप्राप्तयोरपि विषययोर्निर्वृतः परमसंतोषवान् आत्मानंदपूर्णत्वादित्यर्थः ॥७॥

नानाश्चर्यमिदं विश्वं न किंचिदिति निश्चयी ॥ निर्वासनः स्फूर्तिमात्रो न किंचिदिव शाम्यति ॥८॥ इति ज्ञानाष्टकं संपूर्णम् ॥

नन्वात्मज्ञानी कथं निर्विकल्पादिरूप इत्याशंक्याह। नानेति। अधिष्ठानतत्त्वसाक्षात्कारेणाध्यस्तवाधे सति नानाश्चर्यमयं विश्वं जगन्न किंचित् एषवस्तुशून्यमिति निश्चयी पुरुषः निवृत्तवासनः केवलचिद्रूपः सन् न किंचिदिव विशेषव्यवहारागोचर एव शाम्यति निवृत्तकार्यकारणोपाधिर्भवति। तत्त्वज्ञानेन सर्वस्यापि स्वप्नवन्निवृत्तेरित्यर्थः ॥८॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां ज्ञानाष्टकमेकादशमं प्रकरणं ॥११॥

कायकृत्यासहः पूर्वं ततो वाग्विस्तरासहः ॥

अथ चिंतासहस्तस्मादेवमेवाहमास्थितः॥१॥

गुरुणोदीरितं ज्ञानं न किंचिदिव शाम्यति। तत्स्वस्मिन्नप्यभिख्यातुं शिष्यो वदति सांप्रतं॥१॥ उक्तं ज्ञानाष्टकेन न किंचिदिव शाम्यतीति तदेव शिष्यः स्वस्मिन् विशदयितुमेवमेवाष्टकमाह। तत्र प्रथमं काय वाङ्मनसां व्यापारोपरममाह कायेति। अहं पूर्वमपि कायिकरूपकर्म सहस्ततोहेतोर्वाग्विस्तरासहः। जपकर्मासहः अथानंतोमनोव्यापार रूपाया चिंता तन्नासहस्तस्माद्धेतोः एवमेव निर्व्यापार एवाहमास्थित आ समस्त्येव स्थित इत्यर्थः॥१॥

प्रीत्यभावेन शब्दादेरदृश्यत्वेन चात्मनः॥

विक्षेपैकाग्र्यहृदय एवमेवाहमास्थितः॥२॥

उक्तव्यापारत्रयोपरमहेतुं वदन्नेवोक्तमनुवदति प्रीत्यभावेनेति। क्षयिष्णुफलजनकस्य शब्दादेः शब्दकायकर्मरूपस्य प्रीत्यभावेन प्रीत्यविषयत्वेन आत्मनश्चादृश्यत्वेन त्रिविधविक्षेपेभ्यो व्यावृत्तं एकाग्रं हृदयं यस्य स विक्षेपैकाग्र्यहृदय इति मध्यमपदलोपी समासः क्षयिष्णुफलजनकस्य जपादेः प्रीत्यविषयत्वाज्जपादिरूपो विक्षेपो न ममास्ति आत्मनश्चादृश्यत्वात्ध्यानाद्यविषयत्वाच्चिंतारूपोपि विक्षेपो मम नासीत्यर्थः। अत एवमेव स्वस्वरूपेणैव अहमास्थितः

समाध्यासादिविक्षिप्तौ व्यवहारः समाधये॥ ॥२॥

एवं विलोक्य नियममेवमेवाहमास्थितः॥३॥

ननु तथापि समाध्यर्थं व्यवहारः कर्त्तव्य इत्याशंक्य नेत्याह समाध्यासादीति कर्तृत्वभोक्तृत्वाद्यनर्थाध्यासादिभिर्विक्षिप्तौ सत्यां तन्निरासार्थं समाधये व्यवहारो नान्यथेति नियमं विलोक्य शुद्धात्मज्ञानिनि मय्यध्यासाभावादेव समाधिशून्य एवाहमास्थित इत्यर्थः॥३॥

हेयोपादेयविरहादेवं हर्षविषादयोः॥

अभावादद्य हे ब्रह्मन्नेवमेवाहमास्थितः॥४॥

हेयेति। पूर्णात्मदर्शिनो मम हेयोपादेयवस्तुनो विरहात् अत एव ममुना प्रकारेण हर्षविषादयोरप्यभावाद्धे ब्रह्मन् गुरो अद्य अधुनाहमेवमेवास्थित इत्यर्थः॥४॥

आश्रमानाश्रमध्यानंचित्तस्वीकृतवर्जनं ॥
विकल्पंममवीक्ष्यैतैरेवमेवाहमास्थितः॥५॥

आश्रमेति। आश्रमानाश्रमध्यानंचतथानक्षयुक्तंचित्तंस्वीकृतंचित्तवर्जनंचएतैस्त्रिभिरेवमम ——— संकल्पविकल्पंवीक्ष्यअहमेवमेवएतत्त्रयरहितएवास्थितः॥५॥

कर्मानुष्ठानमज्ञानाद्यथैवोपरमस्तथा ॥
बुध्वासम्यगिदंतत्त्वमेवमेवाहमास्थितः॥६॥

कर्मेति। यथैवकर्मानुष्ठानमज्ञानात्तथैवोपरमः कर्मोपरमोप्यज्ञानादेवइदंसम्यक्यथार्थंतोबुध्वाहमेवमेवकर्मतदुपरमरहितएवाहमास्थितः॥ ६ ॥

अचिंत्यंचिंत्यमानोपिचिंतारूपंभजत्यसौ ॥
त्यक्त्वातद्भावनंतस्मादेवमेवाहमास्थितः॥७॥

अचिंत्यमिति। अचिंत्यंब्रह्मेतिचिंत्यमानोप्यसावात्मा चिंतालक्षणंरूपंभजति। तस्माद्धेतोः सद्भावनमचिंत्यंब्रह्मेतिभावनंत्यक्त्वा अहमेवभावनारहितएवास्थितः॥७॥

एवमेवकृतंयेनसकृतार्थोभवेदसौ॥ एवमेवस्वभावोयःसकृतार्थोभवेदसौ॥ ८ ॥ द्वादशमंप्रकरणं ॥

एवमेवेत्यवस्थायाः साधकोपिश्रेष्ठः किंपुनस्तत्स्वभावइतिकैमुतिकन्यायेनाह। एवमेवेति। येनएवमेवसर्वक्रियारहितमेवस्वरूपंसाधनवशात्कृतंसोसौकृतार्थोभवेत्। यस्तुएवमेवस्वभाववान् सोसौकृतार्थोभवतीतिकिंवक्तव्यमित्यर्थः॥ ८॥ इतिश्रीमहेश्वरविरचितायामष्टावक्रटीकायामेवमेवाष्टकंद्वादशकंप्रकरणं॥

अकिंचनभवंस्वास्थ्यंकौपीनत्वेपिदुर्लभं ॥
त्यागादानेविहायास्मादहमासेयथासुखं॥१॥

एवमेवेत्यवस्थायाः फलीभूतांसुखस्थितिं। प्राहशिष्यः स्फुटीकर्तुंअहमासेयथासुखं॥१॥ अथैवमेवेत्यवस्थायाः फलीभूतांसुखावस्थांस्वकीयांविशदयितुमाह। अकिंचनेति। अकिंचनभवंसर्वसंगाभावप्रभवंस्वास्थ्यंचित्तस्थैर्यंकौपीनत्वेपिकौपीनासक्तावपिदुर्लभं। अस्मात्का

रणादहंत्यागादानेविहाय त्यागादानयोरासक्तिंविहाय यथासुखंसु खमनतिक्रम्याहमासेनकदाचिद्दुःखीत्यर्थः ॥१॥

कुत्रापिखेदःकायस्यजिह्वाकुत्रापिखिद्यते ॥
मनःकुत्रापितत्त्यक्त्वापुरुषार्थेस्थितःसुखं ॥२॥

कुत्रापिइति॥कुत्रापिशरीरकर्मणिकायस्यखेदःकुत्रापिवाचिक कर्मणिजिह्वाखिद्यतेकुत्रापिध्यानादिकर्मणिमनःखिद्यते॥अतोहं तत्त्रयमपित्यक्त्वासुखंयथास्यात्तथापुरुषार्थेस्वात्मन्येवस्थितः॥२॥

कृतंकिमपिनैवस्यादितिसंचिंत्यतत्वतः॥
यदायत्कर्तुमायातितत्कृत्वासेयथासुखं॥३॥

ननुकायवाङ्मनोव्यापारत्यागेदेहएवसद्यःपतेद्भोजनांबुपाना देरपित्यागादित्याशंक्याहकृतमिति। शरीरेंद्रियादिभिःकृतंकिमपि तत्वतःआत्मकृतंनस्यात्इतिसंचिंत्ययदायच्छरीरादिकर्मकर्तुमाया तितदहंकारशून्यत्वेनकृत्वाअहंयथासुखमासे ॥ ३॥

कर्मनैष्कर्म्यनिर्बंधभावा देहस्थयोगिनः ॥
संयोगायोगविरहादहमासेयथासुखं॥४॥

ननुकर्मवानैष्कर्म्यवाएकत्रनिष्ठावश्यंस्वीकार्यापुरुषार्थार्थिने त्याशंक्याह।कर्मेति।कर्मनैष्कर्म्यनिर्बंधरूपाभावाःस्वभावादेहस्थयो गिनःदेहासक्तयोगिनएवअहंतुदेहसंयोगादेहसंयोगविरहादपिय थासुखमासेतथाचममदेहाद्यासंगाभावान्नकर्मनैष्कर्म्यनिर्बंधइत्यर्थः ॥४॥

अर्थानर्थौनमेस्थित्यागत्यानशयनेनवा॥
तिष्ठन्गच्छन्स्वपन्तस्मादहमासेयथासुखं॥५॥

अथलौकिकव्यापारेपिममननिर्बंधइत्याह।अर्थेति।ममस्थित्या दिनासाध्यौअर्थानर्थौनस्तःपूर्णानंदात्मदर्शित्वात्तस्मादनासक्त्या तिष्ठन्गच्छन्स्वपन्वाअहंयथासुखमासे॥५॥

स्वपतोनास्तिमेहानिःसिद्धिर्यत्नवतोनवा ॥
नाशोल्लासौविहायास्मादहमासेयथासुखं॥६॥

एतदेवभंग्यंतरेणाह।स्वपतइति।स्वपतोयत्नरहितस्यमेममहानि र्नास्तियत्नवतश्चवाममसिद्धिःफलविशेषप्राप्तिर्नास्ति। अस्मात्कार

णाद्यलायलयोर्नाशोल्लासौविहायाहंयथासुखमासे॥६॥

सुखादिरूपानियमंभवेष्वालोक्यभूरिशः॥शुभाशुभेविहा
यास्मादहमासेयथासुखं॥७॥इत्यष्टावक्रे सुखसप्तकं॥

सुखादीति।भावेषवतारेषुसुखादिरूपानियमंसुखदुःखादिधर्माणा
मनित्यत्वंभूरिशोवहुसुस्थलेष्वालोक्यतस्मात्सुखाद्यनित्यत्वदर्शना
द्धेतोरहंयथासुखमासे॥७॥इतिश्रीमद्विश्वेश्वरवि०म०टी०यथासु
खसप्तकंत्रयोदशंप्रकरणं॥

प्रकृत्याशून्यचित्तोयःप्रमादाद्भावभावनः॥
निद्रितोबोधितइवक्षीणसंस्मरणोहिसः॥१॥

उदीरितांसुखावस्थांसमर्थयितुमात्मनि।प्राहशिष्यःशमावस्थां
चतुःश्लोक्यागुरुंप्रति॥१॥पूर्वंतुगुरुणोपशमाष्टकमुक्तंसंप्रतितु
शिष्यःस्वसुखावस्थांसमर्थनार्थमात्मनःशमावस्थामाह।प्रकृत्ये
ति।प्रकृत्यास्वभावेनविषयेषुशून्यचित्तःप्रमादादवुद्धिपूर्वक
मारब्धवशाद्भावान्विषयान्भावयतिचिंतयतीतिभावभावनःकइव
निद्रितोबोधितइव।यथानिद्रावशाच्छून्यचित्तःकेनचिद्बोधित
त्वात्प्रमादाद्भावभावनएवंविधोयःपुमान्विषयेषुशांतचित्तःसः
हिनिश्चितंक्षीणसंसरणःसंसारहेतुविषयानुस्मरणाभावादित्यर्थः

क्वधनानिक्वमित्राणिक्वमेविषयदस्यवः॥ ॥१॥
क्वशास्त्रंक्वचविज्ञानंयदामेगलितास्पृहा॥२॥

क्वधनानीति।विषयभावनाशून्यस्यपूर्णात्मदर्शिनोमेयदास्पृहा
विषयेच्छागलितातदामेक्वधनानिक्वविषयरूपादस्यवश्चौराः॥क्व
शास्त्रंक्वचविज्ञानमहंब्रह्मास्मीतिनिदिध्यासनंचक्वधनादिविज्ञा
नांतेष्वपिममास्थानास्तीत्यर्थः॥२॥

विज्ञातेसाक्षिपुरुषेपरमात्मनिचेश्वरे॥
नैराश्येबंधमोक्षेचनचिंतामुक्तयेमम॥३॥

विज्ञातइति।देहेंद्रियादीनांसाक्षिपुरुषेत्वंपदार्थेपरमात्मनिचे
श्वरेतत्पदार्थेविज्ञातेब्रह्माहमस्मीतिसाक्षात्कृतेसतिनित्यनिर्मु
क्तचिद्रूपात्मतानुभवाद्बंधमोक्षेपिनैराश्येसतिममयुक्त्यर्थंनचिंता
॥३॥

अंतर्विकल्पशून्यस्य बहिः स्वच्छंदचारिणः ॥ भ्रांतस्येव दशास्तास्तास्तादृशा एव जानते ॥ ४ ॥ शांतिप्रकरणं ॥ १४ ॥

ननु प्रमादाद्भावभावकः कथं शांत इत्याशंक्याह । अंतर्विकल्पेति । अंतःकरणे विकल्पशून्यस्य बहिर्भ्रांतस्येव स्वच्छंदचारिणः ज्ञानिनो दशास्तादृशा एव ज्ञानिन एव जानते ॥ ४ ॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां शिष्यप्रोक्तं शांतिचतुष्टयं चतुर्दशप्रकरणं १४

यथातथोपदेशेन कृतार्थः सत्त्वबुद्धिमान् ॥
आजीवमपि जिज्ञासुः परस्तत्र विमुह्यति ॥ १ ॥

दुर्लक्ष्यमात्मनस्तत्त्वं प्रत्यापयितुमंजसा ॥ मुहुस्तत्त्वोपदेशार्थं गुरुरेष दयोदधिः ॥ १ ॥ यद्यपि प्रथममात्मतत्त्वोपदेशः कृत एव तथापि तदात्मतत्त्वमंतेवासिभ्यः पुनः पुनरुपदेष्टव्यं दुर्लक्ष्यत्वात् ॥ यथा छांदोग्योपनिषदि नवकृत्वः श्वेतकेतुं प्रतीत्याचारशिक्षार्थं असकृदात्मोपदेशं गुरुराह । तत्रादौ ज्ञानाधिकारिणमनधिकारिणं चाह यथातथेति । सत्त्वबुद्धिमान् शिष्यो यथातथा आपाततोप्युपदेशेन कृतार्थः स्यात् । अत एव कृतयुगे प्रणवमात्रोपदेशादपि शिष्याः कृतार्थाः बभूवुः । परः असत्त्वबुद्धिः यावज्जीवं जिज्ञासुरपि बहुधोपदिष्टोपि विमुह्यति । यथा विरोचनो ब्रह्मणा बहुधोपदिष्टोपि मुमोहैवेत्यर्थः ॥ १ ॥

मोक्षो विषयवैरस्यं बंधो वैषयिको रसः ॥
एतावदेव विज्ञानं यथेच्छसि तथा कुरु ॥ २ ॥

अथ बंधमोक्षौ सुखोपायेन संग्रहेण निरूपयति । मोक्ष इति । विषयेष्वनुरागाभाव एव मोक्षः ॥ विषयेष्वनुरागस्तु बंध इत्यर्थः ॥ एतावदेव बंधमोक्षयोर्विशिष्टं उत्कृष्टं ज्ञानं । एवं ज्ञात्वा च त्वं यथेच्छसि तथा कुरु ॥ २ ॥

वाग्मिप्राज्ञमहोद्योगं जनं मूकजडालसं ॥
करोति तत्त्वबोधोयमतस्त्यक्तो बुभुक्षुभिः ॥ ३ ॥

इदं तु विषयवैरस्यं तत्त्वबोधसाध्यमित्याह । वाग्मीति । अयं प्रसिद्धः आत्मतत्त्वबोधः वाग्मिनं जनं बहु चतुरवाक्यभाषिणं मूकं

रोति। प्राज्ञं नानाविशेषवेदिनं जनं जडं करोति। महोद्योगं नानाक्रियानुष्ठानशालिनमलसं निःक्रियं करोति। मनसः प्रत्यक्प्रवणत्वधावागादयः कुंठिता भवंति। ज्ञानी तद्रहितो भवतीत्यर्थः यतोयं तत्त्वबोधः वागादीन्कुंठितान्करोति। अतो भोगेच्छुभिः त्यक्तः अनादृतइत्य
नत्वंदेहो न ते देहो भोक्ता कर्त्ता न वा भवान्॥ थे॥३॥
चिद्रूपोसि सदा साक्षी निरपेक्षः सुखं चर॥४॥
तत्वबोधसिध्यर्थमुपदिशति। नत्वमिति। त्वं देहादिरूपो न भवसि यतश्चिद्रूपोसि। न ते तव देहसंबंधः असंगो ह्ययं पुरुष इति श्रुतेः। न वा भवान्कर्ता भोक्ता यतः कर्तृभोक्तृप्रभृतीनां सदा साक्षी। यो यत्साक्षी स तद्भिन्नः यथा घटसाक्षी घटाद्भिन्न इत्यर्थः। अतस्त्वं देहतत्संबंधिषु निरपेक्षः सन्सुखं चरेत्यर्थः॥४॥
रागद्वेषौ मनोधर्मौ न मनस्ते कदाचन॥
निर्विकल्पोसि बोधात्मा निर्विकारः सुखं चर॥५॥
निरपेक्षत्वमुपपादयितुमाह रागेति। रागद्वेषौ तु मनोधर्मौ न तु तवधर्मौ मनस्तु कदाचिदपि तव संबंधि न भवति। अतस्तदध्यासाद्रागाद्यध्यासं माकुर्वित्यर्थः ननु रागद्वेषौ ममैव धर्मौ कथं नेत्याशंक्याह। निर्विकल्प इति। यतस्त्वं निर्विकल्पः बोधात्मा चासि अतो रागादिविकाररहितः सन्सुखं चरेत्यर्थः॥५॥
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि॥
विज्ञाय निरहंकारो निर्ममस्त्वं सुखी भव॥६॥
सर्वेति। सर्वभूतेषु कारणत्वेनानुस्यूतमात्मानं विज्ञाय विभाव्य सर्वभूतानि चात्मनि अध्यस्तानीति विभाव्य अहंकारादेः सर्वस्यात्मत्वेनैव स्फुरणादहंममाभिमानरहितस्त्वं सुखी भव॥६॥
विश्वं स्फुरति यत्रेदं तरंगा इव सागरे॥ ॥
तत्त्वमेव न संदेहश्चिन्मूर्ते विज्वरो भव॥७॥
सर्वभूतानि चात्मनीत्येतद्विशदयति॥ विश्वमिति। यत्रेदं विश्वं सागरे तरंगा इवाधिष्ठानाभिन्नं तच्चैतन्यं त्वमेव अतः कारणात् हे चिन्मूर्ते त्वं विज्वरो भव चिन्मात्रोहमित्यनुभवान्निरस्तसर्वसंतापो

भवेत्यर्थः ॥७ ॥

अष्टवतात अष्टवनात्ममोहंकुरुष्वभो ॥
ज्ञानस्वरूपोभगवानात्मात्वंप्रकृतेःपरः॥८॥

परमकारुणिकतयापुनःपुनर्बोधयति। अष्टवेति। अष्टवतात अष्टव अत्र चिद्रूपतायामसंभवनाविपरीतभावनारूपंमोहंमोहं अविवेकंन कुरुष्वमाकार्षीरित्यर्थः। माकुरुष्व अत्र युक्तंविशदयति। ज्ञानेति। ज्ञानस्वरूपःप्रकृतेःपरस्त्वंकीदृशस्त्वंभगवान् तस्य दार्थः। तथा आत्मात्वंपदार्थः॥८॥

गुणैःसंवेष्टितोदेहस्तिष्टत्यायातियातिच ॥
आत्मानगंतानागंताकिमेनमनुशोचसि॥२॥

गुणैरिति। गुणैरिंद्रियादिभिःसंवेष्टितोदेहोइहलोकेतिष्टति। तथा आयाति। तथाकिंचित्कालंयातिचगच्छति। देहादिभिन्नआत्मातु नगंतानाप्यागंताऽतोहंगंताहंमरिष्यामीत्येवमेनंकिंशोचसिदेह धर्मैरात्मानंमाशुचइत्यर्थः॥९॥

देहस्तिष्ठतुकल्पांतंगच्छत्वद्यैववापुनः ॥
क्ववृद्धिःक्वचवाहानिस्तवचिन्मात्ररूपिणः॥१०॥

नापिदेहस्थित्युत्क्रांतिभ्यांतववृद्धिहानिरित्याहदेहइति। नित्यचि न्मात्ररूपिणःतवदेहस्थित्यानवृद्धिःनवादेहनिवृत्याहानिरित्यर्थः

त्वय्यनंतमहांभोधौविश्ववीचिःस्वभावतः॥ ॥१०॥
उदेतुवास्तमायातुनतेवृद्धिर्नवाक्षतिः॥११॥

त्वयीति। विश्वाख्यावीचिरपिस्वभावतःअविद्याकामकर्मतःत्व य्यनंतचित्समुद्रेउदेतु अथवा अस्तमायातुएतावतापितेतवनवृद्धिर्न वाक्षतिःतवानंतत्वादित्यर्थः॥११॥

तातचिन्मात्ररूपोसिनतेभिन्नमिदंजगत्॥
अतःकस्यकथंकुत्रहेयोपादेयकल्पना॥१२॥

ताततिः। सर्वस्यत्वदभिन्नत्वात्किंहेयमुपादेयंकथंकेनवाप्र कारेणहेयमुपादेयंकुत्रवाहेयमुपादेयमित्यर्थः॥१२॥

+ एकस्मिन्नव्ययेशांतेचिदाकाशेमलेत्वयि॥

कुतोजन्मकुतःकर्मकुतोहंकारएवच ॥ १३ ॥

एकस्मिन्निति। एकस्मिन्सजातीयविजातीयस्वगतभेदशून्येऽव्ययेविनाशरहितेच शांतेकार्यशून्येचिदाकाशेनिर्मलेचसर्वोपाधिशून्येचत्वयिकुतोजन्मकुतश्चकर्मकुतश्चाहंकारः द्वितीयस्यहेतोरभावात्। अव्ययस्यजन्मासंभवात्। कार्यशून्यस्यचकर्मकर्तृत्वासंभवात् निर्मलस्यचाहंकारासंभवादित्यर्थः ॥ १३ ॥ ॥ ॥

यत्त्वंपश्यसितत्रैकस्त्वमेवप्रतिभाससे ॥

किंपृथक्भासतेस्वर्णात्कटकांगदनूपुरं ॥ १४ ॥

एकत्वमुपपादयति। यत्त्वमिति। यद्यत्कार्यंत्वंपश्यसितत्रकारणरूपस्त्वमेवएकःप्रतिभाससेकटकांगदादौस्वर्णवदित्यर्थः ॥ १४ ॥

अयंसोहमयंनाहंविभागमितिसंत्यज ॥

सर्वमात्मेतिनिश्चित्यनिःसंकल्पःसुखीभव ॥ १५ ॥

अयंसोहमिति। कारणरूपआत्मैवसर्वमितिनिश्चित्यभेदभ्रमंसज। तथाचनिर्विकल्पोविगतनानाप्रतिभासःसन्सुखीभव। द्वितीयप्रतिभानात्दुःखंभवतीत्यर्थः ॥ १५ ॥

तवैवाज्ञानतोविश्वंत्वमेकःपरमार्थतः ॥

त्वत्तोन्योनास्तिसंसारीनासंसारीचकश्चन ॥ १६ ॥

विभागत्यागेयुक्तिमाह ॥ तवैवेति। तवैवाज्ञानतोविश्वंविश्वाकारोविक्षेपः। अतःपरमार्थतस्त्वमेकः अतःसंसार्यसंसारीचत्वत्तोनान्यःकश्चिदित्यर्थः ॥ १६ ॥

भ्रांतिमात्रमिदंविश्वंनकिंचिदितिनिश्चयी ॥

निर्वासनःस्फूर्तिमात्रोनकिंचिदिवशाम्यति ॥ १७ ॥

भ्रांतिमात्रमिति। इदंविश्वंभ्रांतिमात्रसिद्धं। अतोहेतोर्नकिंचित्एथक्सत्तारहितमित्यर्थः ॥ इतिनिश्चयीअतएवसर्वस्यनिरस्तत्वान्निर्वासनःस्फूर्तिमात्रोवासनारहितःस्फूर्तिमात्रःसन्नकिंचिदिवनिरस्ताशेषविशेषःसन्शाम्यति ॥ १७ ॥

। एकएवभवांभोधावासीदस्तिभविष्यति ॥

नतेबंधोस्तिमोक्षोवाकृतकृत्यःसुखंचर ॥ १८ ॥

एकएवेति। कालत्रयेपिभवांभोधौएकस्त्वमेव। अतस्तवबंधमोक्षौ नस्तः। अतस्त्वंकृतकृत्यः सन्सुखंचर॥१८॥

मासंकल्पविकल्पाभ्यांचित्तंक्षोभयचिन्मय॥
उपशाम्यसुखंतिष्ठस्वात्मन्यानंदविग्रहे॥१९॥

मासंकल्पेति। हेचिन्मयत्वंसंकल्पविकल्पाभ्यांचित्तंमाक्षोभयउपशाम्यउपरतसंकल्पविकल्पोभव। आनंदरूपेस्वात्मनिसुखंतिष्ठ१९

त्यजैवध्यानंसर्वत्रमाकिंचित्हृदिधारय॥
आत्मात्वंमुक्तएवासिकिंविमृश्यकरिष्यसि॥२०॥
इतिश्रीतत्वोपदेशविंशतिकंपंचदशकं॥

ध्यानमपिसजेत्याह त्यजेति। सर्वत्रध्यानंत्यज। कुत्रापिध्यानंमाकार्षीरित्यर्थः। एतदेवविशदयतिमाकिंचिद्धृदिधारयेति। मननमपित्यजेत्याह। आत्मेति। आत्मात्वंसदामुक्तएवासि। अतोविमृश्यविचार्यकिंफलंकरिष्यसि। नित्यमुक्तत्वादित्यर्थः॥२०॥ इतिश्रीमहिम्नेश्वरविरचितायामष्टावक्रटीकायांतत्वोपदेशविंशतिकं पंचदशमंप्रकरणं॥१५॥

आचक्ष्वशृणुवातातनानाशास्त्राण्यनेकशः॥
तथापिनतवस्वास्थ्यंसर्वविस्मरणादृते॥१॥

दृश्यकृत्स्नत्वेनसर्वस्यविस्मृतिर्मुक्तिसाधनं। तत्साध्यनर्थविच्छेदद्वारेणेत्यत्रवर्ण्यते॥१॥ तत्वज्ञानेनसर्वप्रपंचस्यदृश्यकृत्स्नतयाविस्मरणकारिणैवतत्स्वापायादिद्वारामुक्तिर्नान्यथेतिविशेषमुपदिशति आचक्ष्वेति। हेतातत्वंनानाशास्त्राणिअनेकशः अनेकवारंशिष्येभ्यः आचक्ष्वगुरुभ्यः शृणुवातथापितवसर्वविस्मरणादृतेस्वास्थ्यंश्रेयोनास्तीत्यर्थः। ननुसुषुप्तौसर्वविस्मरणंसर्वेषांविद्यतेएवतेनसर्वेषांमोक्षःस्यादितिव्यर्थंसर्वविस्मरणमितिचेत्सत्यं। सुषुप्तौतुयद्यपिविषयविस्मरणमस्तितथाप्यज्ञानविस्मरणंनास्तीतिसर्वविस्मरणाभावात्। जीवन्मुक्तस्यतुअज्ञानादेःसर्वस्याध्यस्तत्वानुसंधानरूपंविस्मरणमस्तीतिभावः॥१॥

भोगंकर्मसमाधिंवाकुरुविज्ञतथापिते॥

चित्तं निरस्तसर्वाशमत्यर्थं रोचयिष्यति ॥२॥

सर्वविस्मरणे सति सर्वं स्वरूपं वीक्ष्य चित्तं निरस्तसर्वाशं भवतीति सूचयन्नाह। भोगमिति। हे विज्ञ त्वं भोगं कुरु कर्म वा कुरु समाधिं वा कुरु तथापि चित्तमत्यर्थं रोचयिष्यति स्वरूपे रुचिमुत्पादयिष्यति॥ कीदृशं चित्तं निरस्तसर्वाशं सर्वविस्मरणे सति सर्वाशानुदयादित्यर्थः॥२॥

आयासात्सकलो दुःखी नैनं जानाति कश्चन॥

अनेनैवोपदेशेन धन्यः प्राप्नोति निर्वृतिं॥३॥

सर्वत्रत्साविलये सति तु कृतेनापि कर्म्मणा दुःखहेतुरायासो न भवतीति सूचयन्नाह। आयासादिति। सकलो जन आयासादेव दुःखी भवति परंतु कश्चन एवमायासं न जानाति दुःखहेतुरयमिति न वेत्ति। अनेनेति। आयासात् सकलो दुःखीत्यनेनैवोपदेशेन धन्यः सुकृती निर्वृतिं परमसुखं प्राप्नोति॥३॥

व्यापारे खिद्यते यस्तु निमेषोन्मेषयोरपि॥

तस्यालस्यधुरीणस्य सुखं नान्यस्य कस्यचित्॥४॥

व्यापारानासक्तिः सुखहेतुरित्याह। व्यापार इति। यो निमेषोन्मेषयोरपि व्यापारे खिद्यते अनासक्तो भवति॥ तस्यालस्यधुरीणस्य क्रियाभिनिवेशरहितस्य सुखं नान्यस्य क्रियाभिनिवेशयुक्तस्य॥४॥

इदं कृतमिदं नेति द्वंद्वैर्मुक्तं यदा मनः॥ ॥

धर्म्मार्थकाममोक्षेषु निरपेक्षं तदा भवेत्॥५॥

सर्वत्रत्साविलये सति द्वंद्वहानिरपि भवतीति सूचयन्नाह। इदं कृतमिति। इदं कृतमिदं नेत्यादि द्वंद्वैर्विमुक्तं यदा मनो भवति। तदा पुरुषार्थचतुष्टयेपि निरपेक्षं द्वंद्वाती तस्य जीवन्मुक्तत्वादित्यर्थः

विरक्तो विषयद्वेष्टा रागी विषयलोलुपः॥ ॥५॥

ग्रहमोक्षविहीनस्तु न विरक्तो न रागवान्॥६॥

पुरुषार्थकामनानिरपेक्षस्तु विरक्तकामुकाभ्यां विलक्षण इत्याह। विरक्त इति। मुमुक्षुः सन्यो विषयद्वेष्टा स विरक्तः कथ्यते। कामसापेक्षः सन्यो विषयलोलुपः स रागीति कथ्यते। यस्तु ग्रहमोक्षविहीनः ग्रहमोक्षाभ्यां विहीनः स विरक्तरागिभ्यां विलक्षणः स

र्वतोनिरपेक्षतया हानोपादाने क्वापि न करोतीत्यर्थः॥ ६॥

हेयोपादेयता तावत्संसारविटपांकुरः॥
स्पृहाजीवति यावद्वै निर्विचारदशास्पदं॥७॥

नन्नु ज्ञानिनोपि हानोपादानादिव्यवहारो दृश्यते इत्याह। हेयोपादेयतेति निर्विचारदशास्पदमविवेकदशामयीभूतास्पृहा तृष्णा यावज्जीवति तावत्पर्य्यंतमेव हेयोपादेयता हेयोपादानादिव्यवहारः संसारवृक्षस्य शाखांकुरो भवति। ज्ञानिनां तु स्पृहाभावे सत्यपि हानोपादानादिव्यवहारे संसारशाखाप्रसरो न भवतीत्यर्थः॥७॥

प्रवृत्तौ जायते रागो निवृत्तौ द्वेष एव हि॥ ॥
निर्द्वंद्वो बालवद्धीमानेवमेव व्यवस्थितः॥८॥

प्रवृत्ताविति। प्रवृत्तौ सत्यां प्रवृत्तौ सत्यामुत्तरोत्तरं विषयेषु रागो जायते॥ विषयेपि द्वेषपूर्वकनिवृत्तौ सत्यामुत्तरोत्तरं विषयेषु द्वेष एव हि जायते। अतो धीमान् ज्ञानी बालवच्छुभाशुभानुसंधानरहितः निर्द्वंद्वः रागद्वेषविहीनः सन्नेव रागजप्रवृत्तिद्वेषजनिवृत्तिरहित एव स्थितः। केवलं प्रारब्धवशादेव कदाचित्प्रवर्त्तते कदाचिन्निवर्त्तते च न तु रागद्वेषवशादित्यर्थः॥८॥

हातुमिच्छति संसारं रागी दुःखजिहासया॥
वीतरागो हि निर्दुःखस्तस्मिन्नपि न खिद्यति॥९॥

हातुमिच्छतीति। यस्तु रागी स दुःखजिहासया संसारं हातुमिच्छति। वीतरागस्तु निर्दुःखः रागोत्थदुःखरहितत्वात्तस्मिन्संसारेस त्यपि न खिद्यति खेदं न प्राप्नोति॥ ९॥

यस्याभिमानो मोक्षेपि देहेपि ममता तथा॥
न च ज्ञानी न वा योगी केवलं दुःखभागसौ॥१०॥

यस्याभिमान इति। अहं ज्ञानी त्रिकालवृत्तांतदर्शी मुक्त इत्येवं यस्य मोक्षेप्यभिमानो नासौ ज्ञानी तथा चाहं योगाभ्यासी देहस्यैव गुणकर्मधर्मरतः मम देहो ब्रह्मचार्युपवासादिसमर्थ इत्येवं देहेप्यभिमानो नासौ योगी न वा ज्ञानी केवलमसौ दुःखभाक् दुःखवेत्त्वहं ममाभिमानानिवृत्तेरित्यर्थः॥ १०॥

हरोयद्युपदेष्टा ते हरिः कमलजोपि वा ॥
तथापि न तव स्वास्थ्यं सर्वविस्मरणादृते ॥११॥
इत्यष्टावक्रे विशेषोपदेशषोडशं प्रकरणं ॥१६॥

सर्वविस्मरणोपदेशमुपसंहरति। हर इति स्पष्टं ॥११॥ इतिश्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां विशेषोपदेशषोडशकं प्रकरणं॥

तेन ज्ञानफलं प्राप्तं योगाभ्यासफलं तथा॥
तृप्तः स्वच्छेंद्रियो नित्यमेकाकी रमते तु यः॥१॥

अथातः श्लोकविंशत्या तत्त्वज्ञस्य दशोच्यते॥ विद्यातत्त्वप्रकर्षस्य व्यक्तये गुरुणा स्फुटं॥१॥ अथान्येषामपि विद्यायां प्रवृत्त्यर्थं तत्त्वज्ञानफलव्याख्यानतया तत्त्वज्ञदशां गुरुर्निरूपयति तेनेति। तेनैव ज्ञानफलं प्राप्तं य आत्मन्येव तृप्तो न भोगादिना अत एव स्वच्छेंद्रियो विषयानासक्तेंद्रियः सन् एकाकी विषयसंयोगं विनैव नित्यमात्मन्येव रमते।

न कदाचिज्जगत्यस्मिन् तत्त्वज्ञो हंत खिद्यति॥
यत एकेन तेनेदं पूर्णं ब्रह्मांडमंडलम्॥२॥

न कदाचिदिति। हंतेति सहर्षसंबोधने। हे शिष्य। अस्मिन् जगति कदाचिदपि तत्त्वज्ञो न खिद्यते। यत एकेनैव तेनेदं ब्रह्मांडमंडलं पूर्णं व्याप्तं। अतो द्वितीयस्याभावान्न खिद्यतीत्यर्थः॥२॥

न जातु विषयाः केपि स्वारामं हर्षयंत्यमी॥
सल्लकीपल्लवप्रीतमिवेभं निंबपल्लवाः॥३॥

न जात्विति। स्वस्मिन्नात्मन्येव रमते तं स्वारामं जातु कदाचिदमी विषया न हर्षयंति तुच्छत्वात् एव यकुसत्ताम प्राप्यैव रमते तं स्वारामं जातु कदाचिदमी विषया न हर्षयंति। इंद्रियरहितत्वात् वा यथा सल्लकीपल्लवप्रीतं इभं गजं निंबपल्लवा न हर्षयंति कटुकत्वादित्यर्थः॥३॥

यस्तु भोगेषु भुक्तेषु न भवत्यधिवासनः॥
अभुक्तेषु निराकांक्षी तादृशो भवदुर्लभः॥४॥

यस्त्विति। यस्य तु भुक्तेषु भोगेष्वासक्तिर्न भवति। अभुक्तेष्वाकांक्षा न भवति आत्मतृप्तत्वात्। तादृशो भवदुर्लभः संसारसागरे कोटिष्वेक इत्यर्थः॥४॥

बुभुक्षुरिहसंसारेमुमुक्षुरपिदृश्यते ॥
भोगमोक्षनिराकांक्षीविरलोहिमहाशयः॥ ५॥

बुभुक्षुरिति। संसारेबुभुक्षुर्मुमुक्षुश्चानेकधादृश्यते।भोगमोक्ष निराकांक्षीमहति पूर्णब्रह्मणि आशयोंतःकरणंयस्यसमहाश योविरलः।यततामपिसिद्धानांकश्चिन्मांवेत्तितत्त्वतइतिभग वद्वचनात् ॥५॥

धर्मार्थकाममोक्षेषुजीवितेमरणेतथा ॥
कस्याप्युदारचित्तस्यहेयोपादेयतानहि॥६॥

धर्मार्थेति। पुरुषार्थचतुष्टयेतथाजीवितमरणयोर्यथा योग्यंहेयोपादेयतारहितोविरलइत्यर्थः॥ ६ ॥

वांछानविश्वविलयेनद्वेषस्तस्यचस्थितौ ॥
यथाजीविकयातस्माद्धन्यआस्तेयथासुखं॥७॥

वांछेति। यस्माज्ज्ञानिनोविश्वविलयेप्रपंचोपरमेवांछानास्ति तस्यप्रपंचस्यस्थितौचद्वेषोनास्ति। अधिष्ठानत्वेनैवब्रह्मरूपा त्मस्फुरणात। तस्मात्कारणाद्धन्योयोविद्वानारब्धवशात् प्राप्तयाप याप्राप्तयाजीविकयासुखमनतिक्रम्यैवास्तेइत्यर्थः॥७॥

कृतार्थोनेनज्ञानेनेत्येवंगलितधीःकृती ॥
पश्यन्शृण्वन्स्पृशन्जिघ्रन्नश्नन्नास्तेयथासुखं॥८

कृतार्थेति। अहमनेनाद्वैतात्मज्ञानेनकृतार्थइत्येवंगलितधीः कृतीभक्षणादिकंकुर्वन्नपिसुखमनतिक्रम्यास्तेकृतार्थत्वधियः सत्त्वादिहिइंद्रियव्यापारेसत्यपिअज्ञानिवरक्तवत्तस्यखेदोनभव तिउपविशेत्व्रजन्तिष्ठन्तन्मयःस्यात्समाहितइतिवचना त्नभवतीत्यर्थः॥ ८ ॥

शून्यादृष्टिर्वृथाचेष्टाविकलानींद्रियाणिच ॥
नस्पृहानविरक्तिर्वाक्षीणसंसारसागरे॥९॥

शून्येति। क्षीणःसंसारसागरोयस्यसः तस्मिन्क्षीणसंसारसागरे पुरुषेस्पृहाविषयेष्वपिनविरक्तिश्चनअतःनस्यमनःकायेंद्रिय व्यापारोवालोन्मत्तादिवदित्याह॥शून्येति। तस्यदृष्टिर्मनोव्यापा

ए: शून्य: संकल्पविकल्परहित: चेष्टाकायव्यापार: वृथाफलमनुद्दिश्यैव तस्यइंद्रियाणिविकलानिपुरःस्थितानामपिविषयाणामनिर्णीयकत्वात्। तदुक्तंभगवद्गीतायां। यस्यांजाग्रतिभूतानिसानिशापश्यतोमुनेरिति॥९॥

नजागर्तिननिद्राति नोन्मीलतिनमीलति॥
अहोपरदशाकापिवर्ततेमुक्तचेतस:॥१०॥

नजागर्तीति। ज्ञानीनजागर्तिजाग्रदवस्थावान्नभवतिअत्रबहिर्विषयाननुसंधानादितिहेतुमाह। नोन्मीलतीति। बाह्यविषयाननुसंधत्तेइत्यर्थः। तथाज्ञानीननिद्रातियत: ननिमीलति। जडोन्मत्तवत्सर्वान्विषयान्ब्रह्मत्वेनपश्यतीत्यर्थः। कातर्हितस्यदशेत्यतआह। अहोइतिआश्चर्येमुक्तचेतस: कापिअलौकिकीपरदशाउत्कृष्टावस्थातुरीयातीतेत्यर्थः॥१०॥

सर्वत्रदृश्यतेस्वस्थ: सर्वत्रविमलाशय:॥
समस्तवासनामुक्तोमुक्त: सर्वत्रराजते॥११॥

इदमेवविशदयतिसर्वत्रेति। सर्वत्रसुखेदु:खेचस्वस्थचित्त:। तथासर्वत्रैवशत्रुमित्रेचविमलाशय: सर्वत्रसमानदर्शी। यत: समस्तविषयवासनाभ्योमुक्त:। अतएवमुक्त: सर्वत्रसर्वासुदशासुराजतेदीप्यते। पूर्णात्मदर्शित्वात्॥११॥

पश्यन्शृण्वन्स्पृशन्जिघ्रन्नश्नन्गृह्णन्वदन्व्रजन्॥ ईहितानीहितैर्मुक्तोमुक्तएवमहाशय:॥१२॥

पश्यन्निति। प्रारब्धवशाद्दर्शनादिकंवहिरिंद्रियव्यापारंकुर्वन्नपिईहितानीहितेरिच्छाद्वेषैर्मुक्तोमहाशयोमहतिआत्मनिआशयोयस्यसमहाशय:मुक्तएवमनोविकारातीतत्वात्॥१२॥

ननिंदतिनचस्तौतिनहृष्यतिनकुप्यति॥
नददातिनगृह्णातिमुक्त: सर्वत्रनीरस:॥१३॥

इदमेवविशदयति। ननिंदति। स्पष्टं। नस्तौति। नहर्षंप्राप्नोति। नकेषुकोपंकरोतीत्यर्थ:कस्मैचिन्नगृह्णाति। सर्वत्रनीरस: मुक्तइत्यर्थः॥१३॥

सानुरागां स्त्रियं दृष्ट्वा मृत्युं वा समुपस्थितम् ॥
अविह्वलमनाः स्वस्थो मुक्त एव महाशयः ॥१४॥
किंच। सानुरागामिति। सानुरागां स्त्रियं दृष्ट्वा अथवा समुपस्थितं
मृत्युं दृष्ट्वा अविह्वलमनाः कामभयाभ्यां विमुक्तमनाः महाशयो मुक्त एव॥
१४
सुखे दुःखे नरे नार्यां संपत्सु च विपत्सु च ॥
विशेषो नैव धीरस्य सर्वत्र समदर्शिनः ॥१५॥
किंच सुखेति। स्पष्टम् ॥१५॥
न हिंसा नैव कारुण्यं नौद्धत्यं न च दीनता ॥
नाश्चर्यं नैव च क्षोभः क्षीणसंसरणे नरे ॥१६॥
न हिंसेति। क्षीणसंसरणे अनरे नराभिमानरहिते विदुषि हिंसा
नाम परद्रोह इत्यादयो मनोविकारा न भवंतीत्यर्थः ॥१६॥
न मुक्तो विषयद्वेष्टा न वा विषयलोलुपः ॥
असंसक्तमना नित्यं प्राप्तं प्राप्तमुपाश्नुते ॥१७॥
न मुक्तेति। जीवन्मुक्तः विषयद्वेष्टापि न। न वा विषयलोलुपः किंतु
हि असंसक्तमनाः सन् प्रारब्धवशात् प्राप्तं प्राप्तमुपाश्नुते भुंक्ते इत्यर्थः
॥१७
समाधानासमाधानहिताहितविकल्पनाः ॥
शून्यचित्तो न जानाति कैवल्यमिव संस्थितः ॥१८
समाधानेति। बहिः शून्यचित्तो ज्ञानी समाधानादिविविधाः क
ल्पना न जानाति। उत्प्रेक्षते विदेहकैवल्यं प्राप्त इव ॥१८॥
निर्ममो निरहंकारो न किंचिदिति निश्चितः ॥
अंतर्गलितसर्वाशः कुर्वन्नपि करोति न ॥१९॥
निर्मम इति अहंममाभिमानशून्यः तथाधिष्ठानातिरिक्तं किं
चिन्न सदिति निश्चयवान्। अतएव अंतर्गलितसर्वाशः अतए
व कुर्वन्नपि न करोति कर्तृत्वाभिमानरहितत्वादित्यर्थः ॥१९॥
मनःप्रकाशः संमोहः स्वप्नजाड्यविवर्जितः ॥
दशां कामपि संप्राप्तो भवेद्गलितमानसः ॥२०॥
इति तत्त्वस्वरूपविंशतिकं समाप्तम् ॥२०॥
* मन इति। गलितं सविशेषवृत्तिहीनं मानसं यस्य स ज्ञानी काम

पि अनिर्वाच्यां दशां संप्राप्तो भवेत्। तदेव दर्शयति। मनःप्रकाश
विवर्जितः सविशेषप्रकाशाभावात्। तथा संमोहवर्जितः प्रत्य
क्प्रवणचित्तत्वात् अतएव स्वप्नवर्जितः जाड्येन सुषुप्त्या च विव
र्जित इत्यर्थः॥ २०॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटी
कायामिति तत्त्वज्ञस्वरूपविंशतिकं॥ ॥ ॥ ॥ ॥ ॥

यस्य बोधोदये तावत् स्वप्नवद्भवति भ्रमः॥
तस्मै सुखैकरूपाय नमः शांताय तेजसे॥ १॥

तत्त्वाभिज्ञे फलीभूत शमस्यैव प्रधानतां। व्याख्यातुं वर्णयते शां
तिः शतश्लोकैः पुनः स्फुटं॥ १॥ तत्र तावच्छांतेः प्रधानतेति ख्याप
यितुं फलीभूतां शांतिं वर्णयितुकामः शांतिशालिनं नमस्करोति
। यस्येति। बोधोदये सति तावत्तत्क्षणमेव प्रपंचभ्रमः स्वप्नव
त् तुच्छो यस्य ज्ञातो भवति। तस्मै शांताय निवृत्तसंकल्प
विकल्पाय अतएव सुखैकरूपाय दुःखाननुविद्धसुखस्वभावा
य अतएव तेजसे स्वप्रकाशाय विदुषे नमः॥ १॥

अर्ज्जयित्वाखिलानर्थान् भोगानाप्नोति पुष्कला
न्॥ नहि सर्वपरित्यागमंतरेण सुखी भवेत्॥ २॥

ननु धनिनोपि सुखिनो दृश्यंते तत्कथं शांतसंकल्प एव सुखै
करूप इत्याशंक्याह॥ अर्जयित्वेति। अखिलानर्थान् धनधा
न्य कांतादीनर्ज्जयित्वा। पुष्कलान् बहुविधान् भोगानेवाप्नोति
। न तु सुखैकरूपः स्यात् तत्क्षये दुःखभागित्वात्। सर्वपरित्या
गमंतरेण सर्वसंकल्पत्यागं विना सुखैकरूपो नहि भवेत् नैव स्या

कर्त्तव्यदुःखमार्त्तंडज्वालादग्धांतरात्मनः॥ त्॥ २॥
कुतः प्रशमपीयूषधारासारमृते सुखं॥ ३॥

संकल्पविकल्पयोस्तु त्यागस्तु कृत्स्नज्ञानमेव त्यागमात्रस्य त
थात्वात्। यथा वंध्यापुत्रे तु कृत्स्नज्ञानमेव त्यागः। असतः त्या
गासंभवात् इदमेव रूपकालंकारेण विशदयति। कर्त्तव्येति। क
र्त्तव्यानि यानि कर्म्माणि तज्जनितानि दुःखान्येव मार्त्तंडज्वालाख
रतरसूर्यतापस्तेन दग्धः अंतरात्मा मनो यस्य तस्य संकल्पवि

कल्पप्रशमामृतधारालक्षणमासारं दिनासुखं कृतः स्यात्॥ ३॥

भवोयंभावनामात्रो न किंचित्परमार्थतः॥
नास्त्यभावः स्वभावानां भावाभावविभाविनां॥ ४॥

संकल्पविकल्पप्रशमस्यामृतत्वं संसाररूपविषनिवर्तकत्वा दित्याशयेनाह॥ भवोयमिति। अयंभवः भावनामात्रः ससंकल्प मात्रप्रभवः परमार्थतः आत्मव्यतिरिक्तं किंचिन्नास्ति। परमार्थ तस्तु आत्मैव भावरूपः नतु अभावरूपः। नन्वभावरूपोपि प्रपं चः कालादिवशात् भावस्वभाव इत्याशंक्याह। नास्तीति भावाभावे षु विभाविनां स्थितानां स्वभावानाम भावो नास्ति। नहि उष्णस्वभा वो वन्हिः कदाचिदपि शीतलस्वभावो दृष्टः। तथा च मनोराज्य वद्भावनामात्रसिद्धः सत्स्वभावः प्रपंचो भावनानिवृत्तौ निवर्त त इति। संकल्पप्रशमः संसारविषतापापगमादात्मामृतप्राप्ति हेतुत्वादमृतमिति भावः॥ ४॥

न दूरं न च संकोचाल्लब्धमेवात्मनः पदं॥
निर्विकल्पं निरायासं निर्विकारं निरंजनं॥ ५॥

ननु संकल्पोपशममात्रेण कथमात्मामृतप्राप्तिरित्याशंक्य त स्य नित्यप्राप्तत्वमाह। न दूरमिति। आत्मनः पदं स्वरूपं दूरं नास्ति नापि संकोचाद्वर्तते परिछिन्नं नास्ति परिपूर्णत्वात्। अत एवात्म नः पदं नित्यलब्धं प्राप्तमेवास्ति संकल्पवशात् पुनरप्राप्तमिवा विद्वांसो मन्यंते कंठगतचामीकरवत्। कीदृशं पदं निर्विकल्पं विकल्पातीतं विकल्पाभावगम्यं वा तथा निरायासं आयासातीतं तदभावगम्यं वा निर्विकारं विकारातीतं निरंजनमुपाधिमलशून्यं॥

व्यामोहमात्रविरतौ स्वरूपादानमात्रतः॥ ॥५॥
वीतशोका विराजंते निरावरणदृष्टयः॥ ६॥

कथं तर्हि तत्त्वज्ञाने न तत्प्राप्तिव्यवहारः शास्त्रकारणामित्या शंक्य भ्रांतिनाशमात्रादेवेत्याह। व्यामोहेति। ज्ञानेन निरावरण दृष्टयः अविद्यानाष्टतरदृष्टयः व्यामोहमात्रस्य प्रपंचभ्रांतिमा त्रस्य विरतौ सत्यां स्वरूपादानमात्रतः आत्मविभ्रांतिमात्रतो

वीतशोका विरजं तेसर्वंदा स्वभावेनैव पूर्णाद्वितीयतया प्रकाशंत इत्यर्थः ॥ ६ ॥

समस्तंकल्पनामात्रमात्मामुक्तः सनातनः ॥
इति विज्ञाय धीरो हि किमभ्यस्यति बालवत् ॥ ७ ॥

आत्मज्ञानरहस्यमाह। समस्तमिति। स्पष्टार्थमिदं ॥ ७ ॥

आत्मा ब्रह्मेति निश्चित्य भावाभावौ च कल्पितौ ॥
निष्कामः किंविजानाति किंब्रूते च करोति किं ॥ ८ ॥

समस्तं कल्पनामात्रमिति। ज्ञानस्य निदानभूतं तत्त्वंपदार्थैक्यज्ञानमाह। आत्मेति। आत्मा त्वंपदार्थः ब्रह्म तत्पदार्थाभिन्नं इति निश्चित्य अधिष्ठानसाक्षात्काराच्च भावाभावौ घटादिः तदभावश्च कल्पिताविति निश्चित्य। तथा च सर्वस्य तुच्छत्वानुसंधानात् कामहेतु विद्याविलयाच्च निःकामः सन्। किंविशिष्टतया जानाति किंब्रूते किंच कार्यं करोति। कर्तृत्वाभिमानरहितत्वात् ज्ञातापि न वक्तापि न क्रियाकर्तापि नेत्यर्थः ॥ ८ ॥

अयंसोहमयंनाहमिति क्षीणा विकल्पनाः ॥
सर्वमात्मेति निश्चित्य तूष्णींभूतस्य योगिनः ॥ ९ ॥

सर्वमात्मेति ज्ञानं सर्वकल्पनानिवर्तकमित्याह ॥ अयमिति। सर्वमात्मेति निश्चित्य अनुभूय तूष्णींभूतस्य निवृत्तपराग्व्यापारस्य योगिनः। वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि। एकीकृत्य विमुच्येत सुखो यं योग उच्यते इति योगलक्षणं मनुनोक्तं। इति विविधाः कल्पनाः क्षीणा भवंति। इतीति किं। अहं करोमि। य एवाहं पूर्वेदिने व्रतमकरवं सोहंयजामि। अयं देवदत्तो गच्छति नाहं गमिष्यामीत्यादयः कल्पनाः क्षीणा भवंतीत्यर्थः ॥ ९ ॥

न विक्षेपो न चैकाग्र्यं नातिबोधो न मूढता ॥
न सुखं न च वा दुःखमुपशांतस्य योगिनः ॥ १० ॥

निवृत्तसंकल्पस्य स्वरूपमाह। द्वाभ्यां। न विक्षेप इति। उपशांतविकल्पस्य योगिनः विक्षेपो व्यग्रता न ऐकाग्र्यादिकमपि नेत्यर्थः ॥

स्वाराज्ये भैक्ष्यवृत्तौ च लाभालाभे जने वने ॥ ॥ १० ॥

निर्विकल्पस्वभावस्य न विशेषोस्ति योगिनः ॥११॥

स्वाराज्येति। स्वाराज्ये स्वर्गराज्ये भैक्ष्यवृत्तौ च प्राप्त्यवस्तु लाभे तदभावे। जने जनसमूहे विजने वने च विशेषो योगिनो नास्ति कीदृशस्य विकल्परहितस्वभावस्येत्यर्थः ॥११॥

क्व धर्मः क्व च वा कामः क्व चार्थः क्व विवेकिता ॥

इदं कृतमिदं नेति द्वंद्वैर्मुक्तस्य योगिनः ॥१२॥

क्व धर्मेति। इदं कृतमिदं न कृतमित्यादिद्वंद्वैर्मुक्तस्य योगिनः धर्मार्थकामाः विवेकिता मोक्षोपायभूता विवेकश्च न भवति। तन्मूलभूताविद्याकामसंकल्पादीनां विनाशादित्यर्थः ॥१२॥

कृत्यं किमपि नैवास्ति न कापि हृदि रंजना ॥

यथाजीवनमेवेह जीवन्मुक्तस्य योगिनः ॥१३॥

कथं तर्हि जीवन्मुक्तस्य लोके क्रियेत्याशंक्य जीवनादृष्टवशादेवेत्याह। कृत्यमिति। जीवन्मुक्तस्य योगिनः संकल्पवशात् किमपि कृत्यं नास्ति। तथा हृदि मनसि कापि रंजना कोपि अनुरागो नास्ति। तद्धेतुभूताविद्याया अभावात्। तथापि अस्य कृत्यं यथाजीवनं जीवनादृष्टमनतिक्रम्य भवतीत्यर्थः ॥१३॥

क्व मोहः क्व च वा विश्वं क्व तद्ध्यानं क्व मुक्तता ॥

सर्वसंकल्पसीमायां विश्रांतस्य महात्मनः ॥१४॥

क्व मोह इति। संकल्पसीमायामात्मबुद्धौ विश्रांतस्य मोहादिकं क भवति किं कारणमाश्रित्य भवति। न किमपि कारणमाश्रित्य भवति। आत्मबुध्या कारणोपमर्दादित्यर्थः ॥१४॥

येन विश्वमिदं दृष्टं स नास्तीति करोतु वै ॥

निर्वासनः किं कुरुते पश्यन्नपि न पश्यति ॥१५॥

येनेति। येन इदं विश्वं घटपटादि दृष्टं स तद्राहितसंस्कारः कदाचित् घटादिकं नास्तीति करोतु वै नास्तीति जानातु यः पश्यन्नपि न पश्यति स निर्वासनः सन् किं कुरुते। यद्विषयकः संस्कारोपि नास्ति। तस्य कर्तुमशक्यत्वादित्यर्थः ॥१५॥

येन दृष्टं परं ब्रह्म सोहं ब्रह्मेति चिंतयेत् ॥

किंचिंतयतिनिश्चिंतोद्वितीयंयोनपश्यति॥१६॥

येनेति। येनपरंव्यतिरिक्तंब्रह्मदृष्टंसअहंब्रह्मेतिचिंतयेत्। यस्तु द्वितीयंनपश्यतिसनिश्चिंतः सर्वचिंतारहितःसन् किंचिंतयतिन किमपिचिंतयति। अद्वितीयात्मानुभवशालिनिब्रह्मचिंतनमपिनास्तीत्यर्थः॥१६॥

दृष्टोयेनात्मविक्षेपोनिरोधंकुरुतेत्वसौ॥
उदारस्तुनविक्षिप्तःसाध्याभावात्करोतिकिं॥१७॥

ज्ञानिनश्चित्तनिरोधोपिनास्तीत्याह। दृष्ट इति। येनआत्मविक्षेपश्चिंतादिभ्रमोदृष्टः असौपुरुषश्चित्तनिरोधंकुरुतेविक्षेपपरिहारार्थंउदारःसर्वत्राद्वितीयात्मदर्शीतुविक्षिप्तएवनास्तिसविक्षेपपरिहारलक्षणस्यसाध्यस्याभावात् किंकुरुतेकथंनिरोधंकुरुतइत्यर्थः॥१७॥

धीरोलोकविपर्यस्तोवर्त्तमानोपिलोकवत्॥
नसमाधिंनविक्षेपंनलेपंस्वस्यपश्यति॥१८॥

इदमेवविवृणोति। धीरइति। धीरअद्वितीयात्मविश्रांतःलोकविपर्यस्तः लोकेषुविक्षेपरहितःप्रारब्धवशाल्लोकवद्वर्त्तमानोपिबाधितानुवृत्त्याव्यवहारपरोपिसन्नयं समाधिरयंविक्षेपस्तथाअयंविक्षेपकृतोलेपआत्मनइत्यादिकंनपश्यतिचिन्मात्रदर्शित्वात्१८

भावाभावविहीनोयस्तृप्तोनिर्वासनोबुधः॥
नैवकिंचित्कृतंतेनलोकदृष्ट्यापिकुर्वता॥१९॥

भावाभावेति। योबुधस्तृप्तःस्वात्मानुभवतृप्तोतएवभावाभावस्फूर्तिविहीनअतएवनिर्वासनःतेनलोकदृष्ट्याकुर्वतापिकिंचिदपिनैवकृतंस्यात्। अकर्त्रात्मज्ञानेनकर्तृत्वाध्यासबाधादित्यर्थः॥१९

प्रवृत्तौवानिवृत्तौवानैवधीरस्यदुर्ग्रहः॥
यदायत्कर्त्तुमायातितत्कृत्वातिष्ठतःसुखं॥२०॥

इदमेवविशदयति। प्रवृत्तौवेति। धीरस्यात्मविश्रांतस्यप्रवृत्तौवानिवृत्तौवादुर्ग्रहःदुराग्रहः कर्तृत्वाभिमानोनास्तिकीदृशस्यधीरस्यप्रारब्धवशाद्यदायत्प्रवृत्तंवानिवृत्तंवाकर्त्तुमायाति। तत्सुख

मनायामस्य यथास्यात्तथा कृत्वा तिष्ठतः अतः कर्त्तृत्वाभिमानाभावाज्ज्ञानिनाकृतमकृतमेवेत्यर्थः॥ २०॥

निर्वासनो निरालंबः स्वच्छंदो मुक्तबंधनः॥
क्षिप्तः संस्कारवातेन चेष्टते शुष्कपर्णवत्॥ २१॥

ननु ज्ञानी चेन्निर्वासनस्तर्हि केन प्रयुक्तः कर्म करोतीत्याशंक्याह॥ निर्वासन इति। निर्वासनः अतएव निरालंबः कर्त्तव्याकर्त्तव्यानुसंधानरहितः अतएव स्वच्छंदः रागद्वेषानधीनः अतो मुक्तबंधनः बंधहेत्वज्ञानशून्यः ज्ञानी संस्कारवातेन क्षिप्तः प्रारब्धपवनेन प्रेरितः सन् शुष्कपर्णवद्विचेष्टते॥ २१॥

असंसारस्य तु क्वापि न हर्षो न विषादता॥
स शीतलमना नित्यं विदेह इव राजते॥ २२॥

संसारसंकल्पादिशून्यस्तु सर्वदा संतुष्ट एवेत्याह। असंसारस्येति। न विद्यते संसारहेतुः संकल्पो यस्य तस्यासंसारस्य हर्षादिका ऊर्मयो न जायंते। अतएव ऊर्मिरहितत्वान्नित्यं शीतलमना विदेह इव राजते षडूर्मिरहितः शिव इति स्मृतेः॥ २२॥ ॥

कुत्रापि न जिहासास्ति नाशो वापि न कुत्रचित्॥
आत्मारामस्य धीरस्य शीतलाच्छतरात्मनः॥ २३॥

कुत्रापीति। आत्मारामस्य अतएव धीरस्य निश्चलचित्तस्य अतएव शीतलः अच्छतरः निर्मलतरः आत्मा मनो यस्य तस्य शीतलाच्छतरात्मनः ज्ञानिनः कुत्रापि जिहासा त्यागेच्छा नास्ति। उपादित्सापि नास्ति। रागद्वेषाभावात्। नाशोऽप्यनर्थोऽपि कुत्रचिन्नास्ति। अनर्थहेतोरज्ञानस्याभावात्॥ २३॥

प्रकृत्या शून्यचित्तस्य कुर्वतोऽस्य यदृच्छया॥
प्राकृतस्येव धीरस्य न मानो नावमानता॥ २४॥

प्रकृत्येति। प्रकृत्या स्वभावेन शून्यं विकाररहितं चित्तं यस्य तस्य धीरस्य आत्मविश्रांतस्य प्राकृतस्येव अज्ञानिन इव यदृच्छया प्रारब्धवशात् कुर्वतोऽस्य विदुषः स्वमानापमानानुसंधानं नास्ती

इतिचिंतानुरोधीयः कुर्वन्नपिकरोति न॥२५॥

कृतंदेहेनेति।इति चिंतांअनुरुध्यतेनिरंतरंआश्रयतिसकुत्रापिन करोति।कर्तृत्वाभिमानाभावादित्यर्थः॥२५॥

अतद्वादीवकुरुतेनभवेदपिबालिशः॥

जीवन्मुक्तः सुखीश्रीमान्संसरन्नपिशोभते॥२६॥

अतद्वादीति।जीवन्मुक्तःअतद्वादीवअहमिदंकरिष्यामीत्य वदन्नेवकार्यंकुरुते।प्रारब्धवशाद्वदन्नपिबालिशःमूर्खोनभ वेत्।अंतर्ज्ञानित्वात्।अतएवसंसरन्नपिसंसारव्यवहारंकुर्वन्न पि।अंतःसुखीअतएवश्रीमान्प्रसन्नतयाशोभावान्अतए वशोभतेदीप्यते।स्वप्रकाशइत्यर्थः॥२६॥

नानाविचारसुश्रांतोधीरोविश्रांतिमागतः॥

नकल्पतेनजानातिनशृणोतिनपश्यति॥२७॥

नानेति।नानाविचारात्द्वैतविचारात्सुश्रांतइवनिवृत्तोयतो धीरोज्ञानीअतएवआत्मन्येवविश्रांतिमागतः।अतएवनकल्प तेसंकल्पादिकंमनोव्यापारंनकरोतिनजानातिबुद्धिव्यापारंनक रोति शब्दंनशृणोति।रूपंनपश्यति।इंद्रियमात्रव्यापारंनकरो तिकर्तृत्वाभिमानाभावादित्यर्थः॥२७॥

असमाधेरविक्षेपान्नमुमुक्षुर्नचेतरः॥

निश्चित्यकल्पितंपश्यन्ब्रह्मैवास्तेमहाशयः॥२८॥

असमाधेरिति।ज्ञानीमुमुक्षुर्नभवति।असमाधेःसमाधेरकरण त्तथाइतरोबद्धोनभवति अविक्षेपात्।द्वैतभ्रमाभावादित्य र्थः कीदृशस्तर्हि ज्ञानीत्याशंक्याह।निश्चित्येति।इदंसर्वंकल्पि तमिति पूर्वमेवनिश्चित्यपश्चात् बाधितानुवृत्त्यापश्यन्नपिमहा शयोनिर्विकारचित्तःअतएवब्रह्मैवआस्ते॥२८॥

यस्यांतःस्यादहंकारोनकरोतिकरोतिसः॥

निरहंकारधीरेणनकिंचिदकृतंकृतं॥२९॥

ननुसंसारंपश्यन्नेवकथंब्रह्मेत्याशंक्याहंकाराभावादित्या ह।यस्येति।यस्यांतःकरणेऽहंकाराध्यासःस्यात्सलोकदृष्ट्यान

कुर्वन्नपि संकल्पादिकं करोति। कर्तृत्वाध्यासात्। निरहंकारेण अत एव धीरेण कर्तृत्वाध्यासरहितेन यद्यपि लोकदृष्ट्या कृतं तथापि स्वदृष्ट्या न किंचिदपि कृतं। कर्तृत्वाध्यासाभावादित्यर्थः यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते इति स्मृतेः॥ २९॥ ॥

नोद्विग्नं न च संतुष्टमकर्तृस्पंदवर्जितं॥
निराशं गतसंदेहं चित्तं मुक्तस्य राजते॥ ३०॥

मुक्तचित्तं वर्णयति द्वाभ्यां नोद्विग्नमिति। मुक्तस्य चित्तं राजते केवलप्रकाशरूपमेव। यतो नोद्विग्नं उद्वेगहेतोर्द्वेषस्याभावान्न च संतुष्टं संतोषहेत्वनुरागाभावात् तथाकर्तृस्पंदवर्जितं संकल्पविकल्पशून्यमत एव निराशं गतः संदेहो यस्मात्तद्गतसंदेहं हेतोरज्ञानस्य नष्टत्वादित्यर्थः॥ ३०॥

निर्ध्यातुं चेष्टितुं वापि यच्चित्तं न प्रवर्त्तते॥
निर्निमित्तमिदं किंतु निर्ध्यायति विचेष्टते॥ ३१॥

निर्ध्यातुमिति। यस्य ज्ञानिनश्चित्तं निर्ध्यातुं निःक्रियत्वेन स्थातुं चेष्टितुं चेष्टां संकल्पादिरूपां कर्तुं वापि न प्रवर्त्तते न संकल्पयति किंतु इदं ज्ञानिनश्चित्तं निर्निमित्तं संकल्परहितमेव सत् निर्ध्यायति निश्चलं स्वरूपे तिष्ठति तथा विचेष्टते विविधां चेष्टां करोतीत्यर्थः॥ ३१॥

तत्त्वं यथार्थमाकर्ण्य मंदः प्राप्नोति मूढतां॥
अथवा याति संकोचममूढः कोपि मूढवत्॥ ३२॥

तान्यज्ञानिनो विशेषं वदन्नेव ज्ञानिनो विरलत्वमाह। तत्त्वमिति। मंदोऽज्ञानी यथार्थं तत्त्वं तत्त्वंपदार्थाभेदं श्रुतेराकर्ण्य असंभावनाविपरीतभावनाभ्यां मूढतामविवेकतां प्राप्नोति। अथवा शास्त्रार्थस्यासात्कारायसंकोचं चित्तसमाधिमायाति। कोपि सहस्रेष्वेक अंतरसंमूढोपि बाह्यगत्या मूढवद्बहिर्व्यवहारकर्ता भवति॥ ३२॥

एकाग्रता निरोधो वा मूढैरभ्यस्यते भृशं॥
धीराः कृत्यं न पश्यंति सुप्तवत्स्वपदे स्थिताः॥ ३३॥

अथवा याति संकोचमित्यनेनोक्तावेकाग्रता निरोधौ दूषयति एकाग्रतेति। एकाग्रता एकमेव ध्येयमस्य तदेकाग्रमेकाग्रस्य भा

वएकाग्रता। एकाग्रताएकलस्यनिष्ठचित्तता। अथवानिरोधः चित्तविलयोमूढैरुत्पन्नात्मसाक्षात्कारैर्वि—परीतभावनानिवृत्त्यर्थंभ्रशमत्यर्थमभ्यस्यते। सुप्तवत्सुषुप्तवद्देहात्मधीरहितेनस्वपदेस्वरूपेस्थिताधीराविज्ञानिनस्तुप्रागुक्तंकिमपिकृत्यंन पश्यंति। अद्वैतानंदात्मसाक्षात्कारेणैवानानंदादिभ्रमस्यदूरापास्तत्वादित्यर्थः॥३३॥

अप्रयत्नात्प्रयत्नाद्वामूढोनाप्नोतिनिर्वृतिं॥
तत्वनिश्चयमात्रेणप्राज्ञोभवतिनिर्वृतः॥३४॥

निरोधस्याकिंचित्करतामाह। अप्रयत्नादिति। मूढःपुरुषःमूढोब्रह्मात्मैकनिश्चयशून्यःअप्रयत्नाच्चितनिरोधात्प्रयत्नात्कर्मानुष्ठानाद्वानिवृत्तिंपरमसुखंनप्राप्नोति। आनंदहेतोरात्मानंदानुभवाभावादित्यर्थः प्राज्ञस्तुसमाधिंवाकर्मवाप्यकुर्वन् तत्वनिश्चयमात्रेणकृतार्थोभवति। दुःखहेतोरज्ञानस्यज्ञानेनदग्धत्वादित्यर्थः॥३४॥

शुद्धंबुद्धंप्रियंपूर्णंनिःप्रपंचंनिरामयं॥
आत्मानंतेनजानंतितत्राभ्यासपराजनाः॥३५॥

ननुमूढस्ययोगाभ्यासादात्मानुभवोभविष्यतीत्याशंक्यनेत्याह। शुद्धमिति। तत्रजगत्यभ्यासपराजनाअज्ञानिनःआत्मानंतेनजानंति कीदृशंशुद्धंमायामलातीतमतएवबुद्धंस्वप्रकाशंप्रियंसुखरूपंपूर्णंयतोनिःप्रपंचमतएवनिरामयंदुःखसंबंधरहितमित्यर्थः॥३५॥

नाप्नोतिकर्मणामोक्षंविमूढोभ्यासरूपिणा॥
धन्योविज्ञानमात्रेणमुक्तस्तिष्ठत्यविक्रियः॥३६॥

इदमेवविवृणोतिनाप्नोतीति। विमूढोनात्मज्ञःअभ्यासरूपिणायोगाभ्यासात्मकेनकर्मणामोक्षंनाप्नोति। नकर्मणानप्रजयाधनेनेतिश्रुतेः। धन्योभाग्यवान् विरः विज्ञानमात्रेणाविक्रियोनिरस्ताविद्याकामकर्माअतएवमुक्तस्तिष्ठति॥३६॥

मूढोनाप्नोतितद्ब्रह्मयतोभवितुमिच्छति॥

अनिच्छन्नपिधीरोहिपरब्रह्मस्वरूपभाक्॥३७॥

मुमुक्षुरपिमूढोब्रह्मनाप्नोतीत्याह। मूढइति। मूढोऽज्ञानीय
तःचित्तनिरोधादेर्ब्रह्मभवितुमिच्छतिततोब्रह्मनाप्नोतिहि
निश्चितंधीरोज्ञानीमोक्षंअनिच्छन्नपिपरब्रह्मरूपभाक्ब्रह्मबाध
यकाऽज्ञानस्यनिवृत्तत्वादित्यर्थः॥३७॥

निराधाराग्रहव्यग्रामूढाःसंसारपोषकाः॥
एतस्यानर्थमूलस्यमूलच्छेदःकृतोबुधैः॥३८

एतदेवस्पष्टयति। निराधारइति। मूढाःअज्ञानिनःनिराधारा
ग्रहव्यग्राःकेवलेनचित्तनिरोधेनैवाहंमोक्ष्यामीतिनिःकारणदुराग्र
हव्यग्राःप्रत्युतसंसारपोषकाःसंसारनिवर्तकज्ञानपराङ्मुखत्वा
द्बुधैःज्ञानिभिःअनर्थमूलस्यएतस्यसंसारस्यमूलच्छेदःकृतःसंसा
रमूलभूतस्याज्ञानस्यज्ञानेननिवृत्तत्वादित्यर्थः॥३८॥

नशांतिंलभतेमूढोयतःशमितुमिच्छति॥
धीरस्तत्त्वंविनिश्चित्यसर्वदाशांतमानसः॥३९॥

किंचनशांतिमिति। मूढःअज्ञानीयतश्चित्तनिरोधादेःशमितु
मिच्छतिनततःशांतिंलभते। धीरोविवेकीतत्त्वंविनिश्चित्यशमि
तुमनिच्छन्नपिस्वभावादेवसदाशांतमानसोभवति। चेतोविकार
हेतोरज्ञानस्यनिवृत्तत्वादित्यर्थः॥३९॥

क्वात्मनोदर्शनंतस्ययदृष्टमवलंबते॥
धीरास्तंतंनपश्यंतिपश्यंत्यात्मानमव्ययं॥४०

किंचक्वात्मनइति। यद्दृष्टंयस्यदृष्टंज्ञातमवलंबतेदृश्यंविषयी
करोति। तस्यात्मनोदर्शनंक्वनक्वापीत्यर्थः। धीराज्ञानिनस्तंतंति
मिरप्रदीपादिकंदृश्यपदार्थंनपश्यंतिकिंतुचिद्रूपमात्मानंपश्यं
ति॥४०

क्वनिरोधोविमूढस्ययोनिर्बंधंकरोतिवै॥
स्वारामस्यैवधीरस्यसर्वदासावकृत्रिमः॥४१॥

क्वेति। यःअज्ञानीश्चक्षचित्तनिरोधेनिर्बंधंकरोति। तस्यविमूढ
स्यक्वचित्तनिरोधःनक्वापिअज्ञानिनांसमाध्युपरमेपुनश्चित्तप्रस
रात। स्वारामस्यैवात्मारामस्यअतएवनिस्वच्चित्तस्यसर्वदासौ

चित्तनिरोधः अकृत्रिमःस्वाभाविकःसर्वदात्मानुभवशालित्वात् ॥४१॥

भावस्य भावकः कश्चिन्न किंचिद्भावकोपरः॥

उभयाभावकः कश्चिदेवमेव निराकुलः ॥४२॥

भावस्येति। कश्चित्तार्किकादिर्भावस्य भावकः भावरूपं परमार्थतः सन्प्रपंच इति भावयति मन्यते इति भावस्य भावकः। अपरः शून्यवादी बौद्धः न किंचिदस्ति इति विभावयतीति न किंचिद्भावकः कश्चित्सहस्रेषु कश्चिदात्मानुभवशाली उभयाभावकः सन्नेवमेव उभयाभावनेनैव निराकुलः स्वस्थचित्त आस्त इत्यर्थः॥

शुद्धमद्वयमात्मानं भावयंति कुबुद्धयः ॥ ४२॥

न तु जानंति संमोहाद्यावज्जीवमनिर्वृत्ताः॥४३

न किंचिदपि चिंतयेदिति भगवद्वचनं सिद्धांतमभिप्रेत्याह शुद्धमिति। कुबुद्धयो मूढबुद्धय एव शुद्धं निर्मलमद्वयं द्वैतवर्जितमात्मानं अतनशीलं व्यापकं भावयंति चिंतयंति न तु जानंति साक्षात्कुर्वंति। कुतः संमोहात् निर्मलत्वस्य कल्पितमलसापेक्षत्वादद्वयस्य कल्पितद्वैतसापेक्षत्वात्। आत्मत्वस्य च कल्पितानात्मसापेक्षत्वात्सापेक्षरूपचिंतनेन तु मोहानिवृत्तेः यतो न जानंति। अत एव यावज्जीवमनिर्वृत्ताः परमसंतोषरहिताः। संतोषस्य ज्ञानैकलभ्यत्वादित्यर्थः॥४३॥

मुमुक्षोर्बुद्धिरालंबमंतरेण न विद्यते ॥

निरालंबैव निष्कामा बुद्धिर्मुक्तस्य सर्वदा॥४४॥

इदमेव विशदयति मुमुक्षोरिति। मुमुक्षोरनधिगतात्मसाक्षात्कारस्य बुद्धिः सविशेषालंबनमंतरेण न विद्यते साक्षात्काराभावात्। मुक्तस्य जीवन्मुक्तस्य अत एव मुक्तावपि निःकामा बुद्धिः सर्वदा निरालंबैव निर्विशेषात्मानुभवरूपैव सविशेषादि परित्यागएवात्मानुभवः॥४४ ॥

विषयद्वीपिनो वीक्ष्य चकिताः शरणार्थिनः॥

विशंति झटिति क्रोडं निरोधैकाग्रसिद्धये॥४५॥

निरोधोपि विषयस्फूर्तिचकितैरेवानुष्ठीयते न तु विशेषज्ञैरि

त्याह। विषयेति। विषयद्वीपिनो विषयव्याघ्रान्वीक्ष्य शार्दूलद्वीपिनौ व्याघ्र इत्यमरः। भीताः शरणार्थिनः स्वात्मरक्षणार्थिनो मूढा एव निरोधसिद्धये एकलस्य चित्तसिद्धये वा झटिति शीघ्रं कोडकं दरीं अंतः प्रदेशं विशंति। न तु ज्ञानिन इत्यर्थः॥४५॥ ॥

निर्वासनं हरिं दृष्ट्वा तूष्णीं विषयदंतिनः ॥
पलायंते न शक्तास्ते सेवंते कृतचाटवः ॥४६

वासनात्याग एव विषयभयनिवृत्तिहेतुरित्याह निर्वासनमिति। निर्वासनो यः पुरुषः तल्लक्षणं हरिं सिंहं दृष्ट्वा विषयदंतिनो न शक्ताः संतस्तूष्णीं मौनं यथास्यात्तथा पलायंते कृतचाटवः कृतप्रियवचनाद्भवतं निर्वासनमीश्वराकृष्टाः स्वयमागत्य सेवंत इत्यर्थः॥४६॥

नमुक्तिकारिकां धत्ते निःशंको युक्तमानसः॥
पश्यन् शृण्वन्स्पृशन् जिघ्रन्नश्नन्नास्ते यथासुखं॥४७

नमुक्तीति। निःशंको गतसंशयः अतएव युक्तमानसो निश्चलमानसः ज्ञानी मुक्तिकारिकां यमनियमादिक्रियामाग्रहान्न धत्ते किं तर्हि कर्तृत्वाध्यासरहितत्वात्। यथासुखमात्मसुखमनतिक्रम्य लोकदृष्ट्या ईक्षणादिक्रियां कुर्वन्नास्ते इत्यर्थः॥४७॥

वस्तुश्रवणमात्रेण शुद्धबुद्धिर्निराकुलः॥
नैवाचारमनाचारमौदास्यं वा प्रपश्यति॥४८॥

वस्त्विति। वस्तुनश्चिदात्मनः श्रवणमात्रेण जातायाशुद्धबुद्धिरखंडात्मसाक्षात्कारस्ततो निराकुलः स्वस्वरूपस्थः पुरुषः आचारं क्रियानुष्ठानमनाचारमशुभं कर्म वा औदास्यं नैष्कर्म्यं उभयत्रापि ताटस्थ्यं वा एतत्त्रयमपि नैव प्रपश्यति। आत्मस्थत्वादित्यर्थः

यदा यत् कर्तुमायाति तदा तत्कुरुते ऋजुः॥ ॥४८
शुभं वाप्यशुभं वापि तस्य चेष्टा हि बालवत्॥४९॥

यदेति। यदा यच्छुभं नैष्कर्म्यं वा अशुभं कर्म वा कर्तुमायाति तल्लोकदृष्ट्या प्रारब्धवशात्कुरुते ऋजुराग्रहरहितः हि यतः कारणात्तस्य चेष्टा बालवत्प्रारब्धमात्रायत्ता न रागद्वेषाधीना॥४९॥

स्वातंत्र्यात्सुखमाप्नोतिस्वातंत्र्याल्लभतेपरं ॥
स्वातंत्र्यान्निर्वृतिंगच्छेत्स्वातंत्र्यात्परमंपदं॥५०॥

स्वातंत्र्यादिति। स्वातंत्र्यात् रागद्वेषानधीनत्वात् सुखंमनःप्रसादमाप्नोति। यतःस्वातंत्र्यात्परं ज्ञानंप्राप्नोति। तथास्वातंत्र्यान्निर्वृतिंनित्यसुखंगच्छेत् प्राप्नुयात् तएवस्वातंत्र्यात्परमंपदंस्वस्वरूपविश्रांतिंगच्छेत् ॥५०॥

अकर्तृत्वमभोक्तृत्वंस्वात्मनोमन्यतेयदा ॥
तदाक्षीणाभवंत्येवसमस्ताश्चित्तवृत्तयः॥५१॥

अकर्तृत्वमिति। यदास्वात्मनः कर्तृत्वमभोक्तृत्वंमन्यते। तदा समस्ताः चित्तवृत्तयः क्षीणाभवंत्येव अमुकं कर्माहंकरिष्यामि। अमुकंमेभोग्यंभवत्वित्यादिचित्तवृत्त्यनुदयेतज्जन्यानामन्यासामपि चित्तवृत्तीनामनुदयादित्यर्थः॥५१॥

उच्छृंखलाप्यकृतकास्थितिर्धीरस्यराजते ॥
नतुसस्पृहचित्तस्यशांतिर्मूढस्यकृत्रिमा॥५२॥

उच्छृंखलेति। वीतस्पृहस्यअकृतकाअकृत्रिमाउच्छृंखलापि शांतिरहितापिस्थितिः शोभते। सस्पृहचित्तस्यमूढस्यतुकृत्रिमाशांतिर्न शोभतेइत्यर्थः॥५२॥

विलसंतिमहाभोगैर्विशंतिगिरिगह्वरान् ॥
निरस्तकल्पनाधीराअबद्धामुक्तबुद्धयः॥५३॥

निरस्तकल्पनानांज्ञानिनांतुभोगतत् शांत्योरप्यनाग्रह इत्याह। विलसंतीति। निरस्तकल्पनाधीराज्ञानिनः कदाचित्प्रारब्धवशान्महाभोगैर्विलसंतिक्रीडंतिकदाचित्प्रारब्धवशाद्गिरिगह्वराण्यर्बतवनानिविशंति। कीदृशाअबद्धाआसक्तिरहिताः यतोमुक्तबुद्धयः कर्तृत्वाध्यासरहितबुद्धयइत्यर्थः॥५३॥

श्रोत्रियंदेवतांतीर्थमंगनांभूपतिंप्रियं ॥
दृष्ट्वासंपूज्यधीरस्यनकापिहृदिवासना॥५४॥

श्रोत्रियमिति। धीरस्यज्ञानिनः श्रोत्रियदेवतातीर्थेपूजनेसतिहृदिकापिवासनाधर्मार्थकामवासनानजायतेतथाअंगनांभू

पतिंप्रियंपुत्रादिकंचदृष्ट्वाकापिकाम्यपदार्थवासना नजायते।स
र्वत्रसमबुद्धित्वादित्यर्थः॥५४॥

भृत्यैःपुत्रैःकलत्रैश्चदौहित्रैश्चापिगोत्रजैः॥
विहस्याधिःकृतोयोगीनयातिविकृतिंमनाक्॥५५

भृत्यैरिति।भृत्यादिभिर्विहस्यउपहस्याधिकृतःतिरस्कृतोयोगी
मनाक्किंचिदपिविकृतिंचित्तक्षोभंनयाति।रागद्वेषहेत्वोर्मोह
स्याभावादित्यर्थः॥५५॥

संतुष्टोपिनसंतुष्टःखिन्नोपिनचखिद्यते॥
तस्याश्चर्यदशांतांतांताद्दृशाएवजानते॥५६॥

संतुष्ट इति।लोकदृष्ट्यासंतोषादियुक्तोपिवस्तुतःतद्रहितःतस्य
ज्ञानिनस्तांतामाश्चर्यदशांताद्दृशाएवज्ञानिनएवजानते॥ ५६ ॥ ॥

कर्त्तव्यतैवसंसारोनतांपश्यंतिसूरयः॥
शून्याकारानिराकारानिर्विकारानिरामयाः॥५७॥

कर्त्तव्यतैवेति।कर्त्तव्यतैवममेदंकर्त्तव्यमितिकार्यसंकल्पएव
संसारस्तद्धेतुत्वात्सूरयोज्ञानिनस्तांकर्त्तव्यतांनपश्यंतिनसंक
ल्पयंति।संकल्पमात्ररहितत्वात्कीदृशाःसूरयःशून्येसर्वका
र्यसूपेतथावर्त्तमानघटाद्याकारेव्याकृतेआकारःआभासोवि
श्वंयेषांतेशून्यकाराःघटाद्याकारानिराकाराअतएवनिर्विकाराः
समाआत्मदर्शिनअतएवनिरामयाःसंकल्पोपप्लवरहिताइत्यर्थः

अकुर्वन्नपिसंक्षोभाद्व्यग्रःसर्वत्रमूढधीः॥ ॥५८॥
कुर्वन्नपितुकृत्यानिकुशलोहिनिराकुलः॥५८॥

अकुर्वन्नपीति।अकुर्वन्नपिमूढधीःसर्वत्रशून्याकारनिराकारे
पुंसंक्षोभात्संकल्पाद्व्यग्रोभवतिलोकदृष्ट्याकृत्यानिकुर्वन्नपिकु
शलोविद्वान्हिनिश्चितंनिराकुलोनिश्चलचित्तआत्माराममत्वादेवे
त्यर्थः॥५८

सुखमास्तेसुखंशेतेसुखमायातियातिच॥
सुखंवक्तिसुखंभुंक्तेव्यवहारेपिशांतधीः॥५९॥

सुखमिति।प्राक्तनवशाद्व्यवहारेजायमानेशांतधीरात्मनिष्ठबु
द्धिर्विद्वान्आत्मसुखमनतिक्रम्यैवास्तेउपविशतिशेतेआगच्छति

गच्छतिबक्तिभुंक्तेसर्वेंद्रियव्यापारंकरोतीत्यर्थः ॥ ५९ ॥ ॥

स्वभावाद्यस्यनैवार्त्तिर्लोकवद्व्यवहारिणः ॥

महाह्रद इवाक्षोभ्योगतक्लेशः सुशोभते ॥ ६० ॥

ननुज्ञानिनोपिव्यवहारेषुकथंनखेदइत्यत आहस्वभावादिति। व्यवहारिणोपियस्यज्ञानिनः लोकवत् प्राकृतजनवत् आर्त्तिः खेदोनजायते। कुतः स्वभावात् साक्षात्कृतानंदस्वस्वभावादात्मसामर्थ्यादित्यर्थः। सगतक्लेशोज्ञानीमहाह्रदइवाक्षोभ्योनिर्विकारः सुशोभते। ६०।

निवृत्तिरपिमूढस्यप्रवृत्तिरुपजायते ॥

प्रवृत्तिरपिधीरस्यनिवृत्तिफलभागिनी ॥ ६१ ॥

निवृत्तिरिति। लोकदृष्ट्याप्रतीयमानापिमूढस्यवाह्येंद्रियव्यापाराणांनिवृत्तिः प्रवृत्तिस्वरूपैवजायते। अहंकारादीनामनिवृत्तत्वात्। धीरस्यज्ञानिनः लोकदृष्ट्याप्रारब्धवशात् प्रतीयमानापिप्रवृत्तिरपिनिवृत्तिफलभागिनीमुक्तिपर्यवसायिनीस्यादहंकरोमीत्यभिमानाभावादित्यर्थः ॥ ६१ ॥

परिग्रहेषुवैराग्यंप्रायोमूढस्यदृश्यते ॥

देहेविगलिताशस्यक्वरागः क्वविरागता ॥ ६२ ॥

परिग्रहेष्वितिमूढस्यदेहाभिमानिनस्तत्संबंधितयापरिगृहीतेषुधनवेश्मादिषुप्रायोबाहुल्येनवैराग्यंदृश्यते। देहेविगलिताशस्यक्वतत्संबंधिनिपुत्रगृहादौरागः स्यात् क्वचशत्रुव्याघ्रादौविरागः स्याद्देहेरागविरागयोरभावेतत्संबंधिषुरागविरागयोर्वक्तुमशक्यत्वादेवेत्यर्थः ॥ ६२ ॥

भावनाभावनासक्ताइष्टिर्मूढस्यसर्वदा ॥

भाव्यभावनयासातुस्वस्थस्यादृष्टिरूपिणी ॥ ६३ ॥

भावनेति। मूढस्यदृष्टिः सर्वदाभावनायांअभावनायांवासक्ताहंभावनांकरोमि। यद्वाहमभावनांकरोमीत्यहंकारात्स्वस्थस्यात्मनिष्ठस्यतुसादृष्टिः भाव्यभावनयाइश्यचिंतयाउपलक्षितापयदृष्टिरूपिणीदृश्यदर्शनरहितरूपैवस्यात्। अहंकरोमीत्यभिमानाभावादित्यर्थः ॥ ६३ ॥

सर्वारंभेषु निःकामो यश्चरेद्बालवन्मुनिः ॥
न लेपस्तस्य शुद्धस्य क्रियमाणेपि कर्मणि ॥ ६४ ॥

ननु देहस्य भावने क्रियमाणेपि तस्य दृष्टिः कथं देहस्याना लंबिनी स्यात् अंकायनिःकामत्वादित्याह। सर्वारंभेति। यो बालवन्निःकामः सन् प्राक्तनवशात् सर्वारंभेषु चरति प्रवर्त्ततेतस्य शुद्धस्याहंकारमलवर्ज्जितस्य कर्म्मणि क्रियमाणे न लेपो न कर्तृतास्यादहंकाराभावादित्यर्थः ॥ ६४ ॥

स एव धन्य आत्मज्ञः सर्वभावेषु यः समः ॥
पश्यन्शृण्वन्स्पृशन्जिघ्रन्नश्नन्निस्तर्षमानसः ॥ ६५

एवंविधोतिधन्य इत्याह। स एवेति। स एवात्मज्ञः धन्य एव नान्यः यः सर्वभावेषु समआत्मबुद्धिः। अतएव निस्तर्षमानसः वित्तस्पृचित्तो भवति। किं कुर्वन् पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन्नपि ॥ ६५ ॥

क्व संसारः क्व चाभासः क्व साध्यं क्व च साधनं ॥
आकाशस्येव धीरस्य निर्विकल्पस्य सर्वदा ॥ ६६ ॥

तस्यैव धन्यत्वे युक्तिमाह। क्वेति। धीरस्य ज्ञानिनः अतएव सर्वदाविकल्परहितस्य संसारः प्रपंचः। क्व। अतएव तत् प्रतिभासश्च। क्व। अतएव साध्यं स्वर्गादिकं क्व। अतएव साधनं यागादिकं च क्व। न क्वापीत्यर्थः ॥ ६६ ॥

स जयत्यर्थसंन्यासी पूर्णस्वरसविग्रहः ॥
अकृत्रिमो नवच्छिन्ने समाधिर्यस्य वर्तते ॥ ६७ ॥

स जयतीति। स अर्थसंन्यासी दृष्टादृष्टप्रयोजनशून्यो यतः पूर्णस्वरसः पूर्णस्वभावो विग्रहः स्वरूपं यस्य स पूर्णस्वरसविग्रहो जयति। सर्वोत्कर्षेण वर्तते। स कः यस्य अकृत्रिमः स्वभाविकः अनवच्छिन्ने पूर्णस्वरूपे समाधिर्यस्य वर्त्तते स जयतीत्यर्थः ॥ ६७ ॥

बहुनात्र किमुक्तेन ज्ञाततत्त्वो महाशयः ॥
भोगमोक्षनिराकांक्षी सदा सर्वत्र नीरसः ॥ ६८ ॥

ज्ञाततत्त्वस्य तु सर्वत्र निराकांक्षत्वमेव मुख्यं लक्षणमित्याह। बहुनेति। अत्र ज्ञानिनि बहुनोक्तेन लक्षणेन किं प्रयोजनं ...चतो

ज्ञाततत्त्वो महाशयः महाशयत्वं विवृणोति। भोगमोक्षयोः फलयो
र्निराकांक्षी अतएव सदा सर्वत्र भोगमोक्षसाधनेषु नीरसः निरनुरागः॥६८॥

महदादिजगद्द्वैतं नाममात्रविजृंभितं॥
विहाय शुद्धबोधस्य किं कृत्यमवशिष्यते॥६९

किंवा महदादीति। महदादिमहदहंकारपंचतन्मात्रापंचमहा
भूतभौतिकजगल्लक्षणं द्वैतं नाममात्रेणैव विजृंभितं विभिन्नमि
व भातं। नतु वास्तवं। वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्य
मिति श्रुतेः। अतएव तत्र कल्पनां विहाय स्थितस्य। अतएव शुद्ध
बोधस्य स्वप्रकाशचिन्मात्रस्वरूपस्य किं कृत्यमवशिष्यते। सर्वदा
सच्चिदानंदाधिगमे नैव कृतकृत्यत्वादिति भावः॥ ६९॥ ॥ ॥

भ्रमभूतमिदं सर्वं किंचिन्नास्तीति निश्चयी॥
अलक्ष्यस्फुरणः शुद्धः स्वभावेनैव शाम्यति॥७०॥

ननु तथापि अनर्थशांत्यर्थे प्रयत्नः कर्तव्य इत्याह॥ भ्रमभूतंइ
ति। अधिष्ठानसाक्षात्कारे सति इदं सर्वं भ्रमभूतं भ्रमेणैव कल्पि
तं अतएवेदं किंचित् किमपि वास्तवं नास्तीति निश्चयी अलक्ष्यस्फु
रणः चिन्मात्रप्रतिभासवान् अतएव शुद्धः स्वरूपसाक्षात्कारेण वा
धिताध्यस्तमलत्वात् स्वभावेनैव शांतो नतु शांत्यर्थं ज्ञानातिरि
क्तमपेक्ष्यमित्यर्थः॥७०॥

शुद्धस्फुरणरूपस्य दृश्यभावमपश्यतः॥
क्व विधिः क्व च वैराग्यं क्व त्यागः क्व शमोपि वा॥७१॥

शुद्धेति। शुद्धस्फुरणरूपस्य स्वप्रकाशचिद्रूपस्य अतएव दृश्यभावं दृश्य
पदार्थमपश्यतः क्व कुत्र कर्मणि विधिः क्व। केषु वा विषयेषु वैरा
ग्यं। क्व केषु पदार्थेषु त्यागः क्व केभ्यः पदार्थेभ्यः शमोपि वा कार्यः
दृश्यपदार्थस्यैवास्फुरणादित्यर्थः॥७१॥

स्फुरतोनंतरूपेण प्रकृतिं च न पश्यतः॥
क्व बंधः क्व च वा मोक्षः क्व हर्षः क्व विषादता॥७२॥

स्फुरतइति। चिद्रूपेणैव स्वप्रकाशमानस्य बंधादिकं नास्तीत्यर्थः॥

बुद्धिपर्यंतसंसारे मायामात्रं विवर्तते॥ ७२॥

निर्ममो निरहंकारो निःकामः शोभते बुधः ॥ ७३

किंच बुद्धीति। बुद्धिरात्मज्ञानमेव पर्यंतो नाशो यस्य तस्मिन्संसारे मायामात्रं मायाशबलितं चैतन्यं विवर्त्तते। अतालिकं जगदाकारं प्राप्नोति। अतो बुधो विद्वान तालिके शरीरे निरहंकारस्तत्संबंधि कलत्रादौ निर्मम अतएव निःकाम अतएव शोभते दीप्यते कामानारत्वात् ७३

अक्षयं गतसंतापमात्मानं पश्यतो मुनेः ॥

क्व विद्या च क्व वा विश्वं क्व देहोहं ममेति वा ॥ ७४ ॥

अक्षयमिति। अक्षय्यमविनाशिनं अतएव संतापरहितमात्मानं पश्यतो मुनेः क्व विद्या क्व शास्त्राणीत्यर्थः। क्व च वा विश्वं क्व च देहः अहं ममेति वा क्व आत्मातिरिक्तस्य विद्याविश्वादेः स्फुरणादित्यर्थः ॥ ७४ ॥

निरोधादीनि कर्माणि जहाति जडधीर्यदि ॥

मनोरथान्प्रलापांश्च कर्त्तुमाप्नोत्यतत्क्षणात् ॥ ७५

आत्मज्ञस्य द्वैतानर्थनिवृत्तिरित्युक्तमज्ञस्य तु चित्तनिरोधादीन्यपि कर्माणि कुंजरशौचप्रायाणीत्याह। निरोधादीनीति। यदि जडधीः चित्तनिरोधादीनि जहाति तर्हि अतत्क्षणात्तस्मादेव क्षणादारभ्य मनोरथान्प्रलापांश्च क्षणपासर्वव्यापारान्कर्तुमाप्नोति प्रवर्त्तते। तथा च मूढस्य चित्तनिरोधादिकमकिंचित्करमित्यर्थः ॥ ७५ ॥

मंदः श्रुत्वापि तद्वस्तु न जहाति विमूढतां ॥

निर्विकल्पो बहिर्यत्नादंतर्विषयलालसः ॥ ७६

मूढस्यात्मश्रवणमप्यनर्थकमित्याह। मंद इति। मंदो मूर्खस्तदात्मवस्तु श्रुत्वापि विमूढतां न जहाति। मलिनचित्तस्य श्रवणादपि ज्ञानानुदयात् अतएव मूढः यत्नात् बहिर्दृष्ट्या निर्विकल्पो निर्व्यापारोपि अंतर्मनसि विषयेषु यत्नाल्लोलुपो भवतीत्यर्थः ॥ ७६ ॥ ॥

ज्ञानाद्गलितकर्मा यो लोकदृष्ट्यापि कर्मकृत ॥

नाप्नोत्यवसरं कर्तुं वक्तुमेव न किंचन ॥ ७७ ॥

ज्ञानी तु लोकदृष्ट्या कर्म कुर्वाणोप्यकर्तैवेत्याह। ज्ञानादिति यः ज्ञानाद्गलितकर्मा गलितक्रियाभ्यासः स लोकदृष्ट्या कर्मकृदपि किंचन कर्तुं वक्तुमेवावसरं नाप्नोति। अहं कर्म करिष्यामीति वक्तु

मप्यवसरं नाप्नोति। कर्मावसरस्तु दूरापास्त इति भावः॥७७॥ ॥

क्व तमः क्व प्रकाशो वा हानं क्व च न किंचन॥
निर्विकारस्य धीरस्य निरातंकस्य सर्वदा॥७८॥

विद्वांस्तु तमःप्रकाशादिकं न पश्यतीत्याह क्वेति। धीरस्य ज्ञानिन अतएव निर्विकारस्य निरस्तमोहादिविकारस्य तमः क्व तमसोभावे चत्तन्निरूप्यः प्रकाशो वा क्व निरातंकस्य कालादिभयशून्यस्य हानं क्व च न क्वत्रेत्यर्थः। अनुरागादिशून्यत्वाच्च किंचन किमप्यादानादि कर्मापि क्व च न न क्वत्रापीत्यर्थः॥७८॥

क्व धैर्यं क्व विवेकित्वं क्व निरातंकतापि वा॥
अनिर्वाच्यस्वभावस्य निःस्वभावस्य योगिनः॥७९

ज्ञानीत्वनिर्वाच्यस्वभाव इत्याह। क्व धैर्यमिति। योगिनः ज्ञानिनः अतएव निःस्वभावस्य अतएव अनिर्वाच्यस्वभावस्य धैर्यं क्व विवेकित्वं च क्व निरातंकता निर्भयतापि क्वेत्यर्थः॥७९॥ ॥ ॥

न स्वर्गो नैव नरको जीवन्मुक्तिर्न चैव हि॥
बहुनात्र किमुक्तेन योगदृष्ट्या न किंचन॥८०॥

ज्ञानिनः तत्वदृष्ट्या तु स्वर्गनरकमोक्षादिकं किंचिदपि नास्तीत्याह। न स्वर्ग इति। सुगमः श्लोकः॥८०॥

नैव प्रार्थयते लाभं नालाभेनानुशोचति॥
धीरस्य शीतलं चित्तममृतेनैव पूरितं॥८१॥

ज्ञानिनश्चित्तं तु प्रार्थनानुतापादिविकाररहितत्वा—दमृते नैव परमानंदेनैव पूरितमित्याह नैवेति। लाभं न प्रार्थयते। अलाभेन सुवर्णाद्यलाभेन नानुशोचति। अतएव धीरस्य चित्तममृते नैव परमानंदेनैव पूरितं स तच्छीतलमा ध्यात्मिकादितापरहितमित्यर्थः॥८१॥

न शांतं स्तौति निष्कामो न दुष्टमपि निंदति॥
समदुःखसुखस्तृप्तः किंचित्कृत्यं न पश्यति॥८२

उक्तप्रायमेवार्थं पुनः पुनर्भंगिविशेषेण वर्णयति। ज्ञानदृशाया सर्वोत्कृष्टत्वख्यापनाय न शांतमिति। निष्कामो विद्याकामकर्मही

नोज्ञानीशांतं शांत्यादिशुद्धसत्त्वगुणयुक्तं नस्तौति नापि दुष्टं निंदति तस्मात् सः समदुःखसुखो भवति निःकामत्वात् किंचित्कृत्यं न पश्यति ॥८२॥

धीरो न द्वेष्टि संसारमात्मानं न दिदृक्षति ॥
हर्षामर्षविनिर्मुक्तो न मृतो न च जीवति ॥ ८३

धीर इति। धीरो ज्ञानी संसारं न द्वेष्टि संसारादर्शित्वाद्बाधितानुसंधानाद्वा तथात्मानं न दिदृक्षति। अवाप्तसाक्षात्कारत्वात्। अत एव हर्षामर्षविनिर्मुक्तः तथा जीवनमरणादिरहितः सदैकरूपत्वादित्यर्थः ॥ ८३ ॥

निःस्नेहः पुत्रदारादौ निःकामो विषयेषु च ॥
निश्चिंतः स्वशरीरेपि निराशः शोभते बुधः ॥ ८४

निःस्नेह इति। निराशो बुधः शोभते दीप्यते कीदृशः पुत्रदारादौ निःस्नेहः प्रीतिरहितः विषयेषु निष्कामः भोगेच्छारहितः स्वशरीरेपि भोजनादिचिंतारहितः ॥ ८४ ॥

तुष्टिः सर्वत्र धीरस्य यथापतितवर्तिनः ॥
स्वच्छंदं चरतो देशान्यत्रास्तमितशायिनः ॥ ८५ ॥

तुष्टिरिति। धीरस्य ज्ञानिनः यथापतितेन यथाप्राप्तेन वर्तते तिष्ठति तस्य यथापतितवर्तिनः सर्वत्र प्रारब्धप्राप्ते सदसद्वस्तुनि च तुष्टिरात्मतोष एव चरतस्तथा स्वच्छंदमनपेक्षितं प्रारब्धवशान्नानादेशान् विचरतः यत्र वने वा नगरे वा सूर्योस्तमितस्तत्रैव शायिनः शयनं कुर्वतः स्वेत्यर्थः ॥ ८५ ॥

पततूदेतु वा देहो नास्य चिंता महात्मनः ॥
स्वभावभूमिविश्रांतिविस्मृताशेषसंसृतेः ॥ ८६

पतत्विति। देहः पततु म्रियतां वा अथवा उदेतु जीवतु वा उभयथापि अस्य ज्ञानिनश्चिंता न भवति। कीदृशस्य स्वभावो नाम निजात्मस्वरूपं स एव भूमिस्तत्र विश्रांत्या विस्मृतसमस्तसंसारस्य ॥ ८६ ॥

अकिंचनः कामचारो निर्द्वंद्वश्छिन्नसंशयः ॥
असक्तः सर्वभावेषु केवलो रमते बुधः ॥ ८७ ॥

अकिंचन इति। केवलो निर्विकारो बुधो रमते। कीदृशः अकिंच

नः नास्तिकिंचित्परिगृहीतंयस्यसः अकिंचनः अतएवकामचारः
विधिनिषेधाद्यकिंकरः स्वच्छंदचारी अतएवनिर्द्वंद्वः सुखदुःखा
दिशून्यः छिन्नसंशयः अद्वैतसंशयशून्यः सर्वेषुभावेषुविषये
ष्वसक्तआसंगशून्यएवेत्यर्थः ॥८७॥

निर्ममः शोभतेधीरः समलोष्टाश्मकांचनः ॥
सुभिन्नहृदयग्रंथिर्विनिर्धूतरजस्तमः ॥८८॥

निर्ममइति। धीरोज्ञानीशोभतेदीप्यते। यतोनिर्ममः। अतएव
समलोष्टाश्मकांचनः ज्ञानबलेनसुभिन्नोहृदयग्रंथिरहंकारोय
स्यसतथा। विनिर्धूतेरजस्तमसीयस्यसः ॥ ८८ ॥

सर्वत्रानवधानस्यनकिंचिद्वासनाहृदि ॥
मुक्तात्मनोवितृप्तस्यतुलनाकेनजायते ॥८९॥

सर्वत्रेति। सर्वत्रसर्वेषुविषयेषुअनवधानस्यएकाग्रतारहि
तस्यतथानकिंचिद्वासनाहृदिमुक्तात्मनः कर्तृत्वाद्यध्यासरहिता
त्मनः अतएवआत्मानंदेनविशेषतस्तृप्तस्यकेनतुलनाजाय
तेज्ञानिव्यतिरिक्तस्यईदृशस्याभावादित्यर्थः ॥८९

जानन्नपिनजानातिपश्यन्नपिनपश्यति ॥
ब्रुवन्नपिनचब्रूतेकोन्योनिर्वासनादृते ॥९०॥

अतुलनामेवविशेषेणविशदयति। जानन्निति। निर्वासनाज्ज्ञा
निनः ऋतेन्यः कोलोकदृष्ट्यामनसाजानन्नपिवस्तुतोनजानाति
तथाचक्षुषापश्यन्नपिवस्तुतोनपश्यतिब्रुवन्नपिनचब्रूते
कर्तृत्वाभिमानाभावादित्यर्थः ॥९०॥

भिक्षुर्वाभूपतिर्वापियोनिष्कामः सशोभते ॥
भावेषुगलितायस्यशोभनाशोभनामतिः ॥९१॥

भिक्षुरिति। यस्यज्ञानिनः उत्कृष्टेषुभावेषुशोभनाअपकृष्टेषु
शोभनत्वावगाहिनीमतिर्गलिताअतएवयोनिष्कामः सभूपतिर्ज
नकादिवत् भिक्षुर्वायाज्ञवल्क्यादिवत् शोभतेएवभावेषुनिर्विक
ल्पत्वाद्राज्यंतस्यनबंधायेत्यर्थः ॥९१॥

क्वस्वाच्छंद्यंक्वसंकोचः क्ववातत्वविनिश्चयः ॥

निर्व्याजार्जवभूतस्य चरितार्थस्य योगिनः ॥९२

क्केति। योगिनः आत्मनिष्ठत्वाच्चरितार्थस्य पूर्णार्थिनाम्नः अन्वर्थनाम्नो वास्याकृत्यं स्वेच्छाचारित्वं क्कतथा संकोचः प्रवृत्त्यादिसंवरणं क्क तत्वनिश्चयः क्क कर्तृत्वं वा क्क कर्तृत्वाध्यासाभावादत एव निर्व्याजं यदार्जवं वक्रत्वशून्य भावस्तद्रूपस्य ॥९२॥

आत्मविश्रांतितृप्तेन निराशेन गतार्तिना ॥
अंतर्यदनुभूयेत तत्कथं कस्य कथ्यते ॥९३॥

आत्मेति आत्मनि विश्रांत्या स्थित्या तृप्तेन अत एवाशारहितेन अत एव गतार्तिना गतदुःखेन ज्ञानिना यदंतःकरणेनुभूयेत तत्कथं कं प्रकारं धर्ममाश्रित्य कथ्यते। प्रकारस्यैव धर्मस्याभावात् कस्य वाधिकारिणः कथ्यते तादृशाधिकारिणो भावादित्यर्थः ९३

सुप्तोपि न सुषुप्तौ च स्वप्नेपि शयितो न च ॥
जागरेपि न जागर्ति धीरस्तृप्तः पदे पदे ॥९४॥

सुप्त इति धीरः सुषुप्तौ न सुप्तः स्वप्नेपि शयितो न च जागरेपि न जागर्ति अवस्थावतीया बुद्धिस्तद्विप्रकाशत्वात् अत एव इदमेवाभिप्रेत्याह पदे पदे क्षणे क्षणे अविरतं नित्यानंदानुभवसंतृप्तः ॥९४॥

ज्ञः सचिंतोपि निश्चिंतः सेंद्रियोपि निरिंद्रियः ॥
सबुद्धिरपि निर्बुद्धिः साहंकारो नहंकृतिः ॥९५॥

ज्ञ इति। ज्ञो ज्ञानी लोकदृष्ट्या चिंतादिसहितोपि वस्तुतस्तद्रहितः विविक्तात्मदर्शित्वादित्यर्थः ॥९५॥

न सुखी न च वा दुःखी न विरक्तो न संगवान् ॥
न मुमुक्षुर्न वा मुक्तो न किंचिन्न च किंचन ॥९६॥

न सुखीति। लोकगत्यासुखीत्यादिरूपोपि वस्तुतस्तद्रहितोंतःकरणाध्यासरहितत्वान्न विरक्तो विषये द्वेषाभावात्। न वा मुक्तः पूर्वमपि बंधनाभावात्तथाऽकिंचनः सदैकरूपत्वात्तथा किंचिदपि न च अनिर्वाच्यत्वात् ॥९६॥

विक्षेपेपि न विक्षिप्तः समाधौ न समाधिमान् ॥
जाड्येपि न जडो धन्यः पांडित्येपि न पंडितः ॥९७

विक्षेपेपीति। धन्यो ज्ञानी लोकदृष्ट्या विक्षेपेपि वस्तुतो न विक्षिप्तः स्वप्रकाशात्मानुभवात्। लोकदृष्ट्या समाधौ प्रतीयमानेपि न समाधिमान्। कर्तृत्वाध्यासाभावाल्लोकदृष्ट्या जाड्ये प्रतीयमानेपि न जडः स्वानुभवशालित्वाल्लोकदृष्ट्या पांडित्ये प्रतीयमानेपि न पंडितः पंडितोहमित्यभिमानाभावात्॥९७॥

मुक्तो यथास्थितिस्वस्थः कृतकर्त्तव्यनिर्वृतः॥
समः सर्वत्र वैतृष्ण्यान्नस्मरत्यकृतं कृतं॥९८॥

मुक्त इति। मुक्तः प्रारब्धवशाद्यथाप्राप्तस्थितौ सत्यामपि स्वस्थचितः तथा कृते पूर्वं कृते कर्तव्ये च करिष्यमाणे कर्मणि निर्वृतः। संतुष्टः अभिनिवेशोद्वेगशून्यः। अतएव च सर्वत्र समः वैतृष्ण्यादिदमकृतं इदं च कृतमिति न स्मरति॥९८॥

न प्रीयते वंद्यमानो निंद्यमानो न कुप्यति॥
नैवोद्विजति मरणे जीवने नाभिनंदति॥९९॥

न प्रीयत इति। कैश्चित्पुरुषैः वंद्यमानो न तुष्यति निंद्यमानो न कुप्यति। मरणे उपस्थिते सति उद्वेगं न प्राप्नोति। आत्मनो नित्यत्वानुसंधानात्। अतएव जीवने सति नाभिनंदति न तुष्यति॥९९॥

न धावति जनाकीर्णं नारण्यमुपशांतधीः॥
यथातथा यत्र तत्र समएवावतिष्ठते॥१००॥

इति शांतशतकं संपूर्णं समाप्तम्॥

न धावतीति। उपशांतधीः पुरुषः जनाकीर्णप्रदेशं नानुधावति। नाप्यरण्यं सर्वत्र शांतत्वात् यथा तथा जनसंमर्देन तदसंमर्दप्रकारेण वा यत्र तत्र वने वा पत्तने वा समः एव स्वस्थचित्त एवावतिष्ठते प्राप्तात्मसाक्षात्कारत्वात्॥१००॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां शांतिशतकं संपूर्णमिति॥

तत्त्वविज्ञानसंदंशमादाय हृदयोदरात्॥
नानाविधपरामर्शशल्योद्धारः कृतो मया॥१॥

साध्यसाधनरूपेण ज्ञाते ज्ञाने गुरोर्मुखात् शिष्यश्चात्मनिविश्रांतिमष्टभिः प्राह सस्फुटं॥१॥ एवं तत्त्वज्ञानिनः स्वभावभूतां शांतिं

श्रुत्वास्वकृतार्थतयागुरुंपरितोषयितुं आत्मविश्रांत्यष्टकं शिष्यः स्वयमाह। तत्वेति। हेगुरो मया भवतः सकाशात्तत्वविज्ञानोपदेशरूपंसंदेशं लोहकारोपकरणमादायस्वहृदयोदरान्नानाविधपरामर्शएवयच्छल्यंतस्यउद्धारः अपहारः कृतः ॥१॥

क्वधर्मः क्वचवाकामः क्वचार्थः क्वविवेकिता ॥
क्वद्वैतंक्वचवाद्वैतंस्वमहिम्निस्थितस्यमे ॥२॥

एतदेवस्पष्टयति। क्वधर्मइति। धर्मोर्थकामा अपिहृदयोदरान्निरस्ताः क्षयिसुखादित्यर्थः। स्वमहिम्निस्थितस्यमेममविवेकिता क्वद्वैतंवाद्वैतंचक्वचिन्मात्रविश्रांतस्यविवेकानुपयोगात्। उत्तीर्णेतुपरेपारेनौकायाः किंप्रयोजनमितिन्यायात् द्वैतस्यचज्ञानबाधितत्वात्। अद्वैतस्यद्वैतसापेक्षत्वेनास्वाभाविकत्वात्। विवेकाद्योपिममनसंतीत्यर्थः ॥ २ ॥

क्वभूतंक्वभविष्यद्वावर्त्तमानमपिक्ववा ॥
क्वदेशःक्वचवानित्यंस्वमहिम्निस्थितस्यमे ॥३॥

क्वद्वैतमित्युक्तमेवविशेषतः प्रपंचयति। क्वभूतमिति कालस्यापिगमास्फूर्तेस्तदुपाधिकाभूतभविष्यवर्तमाना अपिनसंतीत्यर्थः ॥ नित्यंस्वमहिम्निस्थितस्यमेदेशोपिनास्तीत्यर्थः ॥ ३ ॥ ॥

क्वचात्माक्वचवानात्माक्वशुभंक्वाशुभंतथा ॥
क्वचिंताक्वचवाचिंतास्वमहिम्निस्थितस्यमे ॥४॥

क्वचात्मेति। अततिव्याप्नोतीति आत्मासचव्याप्यमपेक्ष्यकथ्यते। स्वमहिम्निस्थितस्यचममात्मादिकंनास्तीत्यर्थः ॥ ४० ॥

क्वस्वप्नः क्वसुषुप्तिर्वाक्वचजागरणंतथा ॥
क्वतुरीयंभयंवापिस्वमहिम्निस्थितस्यमे ॥५॥

क्वस्वप्नइति। स्वप्नादयोबुद्धेरेवावस्था ममनसंति। एतत्त्रितयाभावेतन्निरूप्यतुरीयावस्थापिममनास्ति। तथाभयादयोप्यंतःकरणधर्माममनसंतीत्यर्थः ॥ ५ ॥

क्वदूरंक्वसमीपंवाबाह्यंक्वाभ्यंतरंक्ववा ॥ ॥
क्ववास्थूलंक्ववासूक्ष्मंस्वमहिम्निस्थितस्यमे ॥६

क्व दूरमिति। सर्वत्र परिपूर्णस्य मम दूरसमीपादिकं नास्ति। पूर्णमात्रदर्शिनो मम स्थूलसूक्ष्मदृष्टिरपि नास्तीत्यर्थः॥६॥

क्व मृत्युर्जीवितं वा क्व क्व लोकाः क्वास्य लौकिकं॥
क्व लयः क्व समाधिर्वा स्वमहिम्नि स्थितस्य मे॥७॥

क्व मृत्युरिति। कालत्रयेपि सद्रूपस्य मम जीवितमरणे न स्तः पूर्णमात्रदर्शिनो स्य मम लोका भूरादयो न संति। लौकिकं कार्यमपि नास्ति। पूर्णस्य मम लस्य लयः क्व च समाधिश्च क्व॥७॥

अलं त्रिवर्गकथया योगस्य कथयाप्यलं॥ अलं विज्ञानकथया विश्रांतस्य ममात्मनि॥८॥ प्रकरणं समाप्तं॥

अलमिति। धर्मार्थकामकथया योगाभ्यासकथया विज्ञानकथया वा लं। आत्मनि विश्रांतस्य मम एतैः प्रयोजनाभावादित्यर्थः॥८॥ इति श्रीमहिश्वेश्वरविरचितायामष्टावक्रटीकायां आत्मविश्रांत्यष्टकं समाप्तं॥

क्व भूतानि क्व देहो वा क्वेंद्रियाणि क्व वा मनः॥
क्व शून्यं क्व च नैराश्यं मत्स्वरूपे निरंजने॥१॥

आत्मविश्रांत्यभिव्यक्तिस्वभावां मुक्तिशालिनीं। जीवन्मुक्तिदशां शिष्यश्चतुर्दशभिरब्रवीत्॥१॥ प्रागुक्तात्मविश्रांतेः फलीभूतां विदुषः स्वभावभूतां जीवन्मुक्तिदशां शिष्यश्चतुर्दशश्लोकैर्निरूपयति। क्व भूतानीति निरंजने सर्वोपाधिमलशून्ये मत्स्वरूपे भूतदेहेंद्रियमनांसि क्व। तर्हि किं शून्यमस्ति नेत्याह। क्व शून्यमिति। नहि सदात्मनि सति शून्यं संभवतीत्यर्थः। मयि नैराश्यमपि स्वाभाविकं न आशानिरूप्यत्वादित्यर्थः॥१॥

क्व शास्त्रं क्वात्मविज्ञानं क्व वा निर्विषयं मनः॥
क्व तृप्तिः क्व वितृष्णत्वं गतद्वंद्वस्य मे सदा॥२॥

क्वेति। सदा गतद्वंद्वस्य मे मम शास्त्रं क्व तज्जन्यं विज्ञानं च क्व। आत्मविश्रांत्या सर्वस्य गलितप्रायत्वात्। निर्विषयं मनोपि न तस्यापि गलितप्रायत्वात्। अत एव तृप्तिरपि न तथा तृप्तिसाध्यं वितृष्णत्वमपि न चित्तस्यैव गलितप्रायत्वादित्यर्थः॥२॥ ॥ ॥

क्व विद्या क्व च वाविद्या क्वाहं क्वेदं मम क्व वा ॥
क्व बंधः क्व च वा मोक्षः स्वस्वरूपस्य क्वरूपिता ॥३॥

क्व विद्येति। मयि क्व विद्याद्यहंकारधर्मा इदं बाह्यं वस्तुजातं क्व ममसंबंधः क्वहि तीयस्य संबंधिनो भावात्। तथा बंधमोक्षावपि धर्मौ क्व। अत्र हेतुमाह। स्वरूपस्येति। निर्विशेषस्वरूपस्य मम रूपिता धर्मवार्त्ता क्व। तथाच। निर्द्धर्मके मयि न विद्यादयोपि धर्माः संतीति फलितार्थः ॥३॥

क्व प्रारब्धानि कर्माणि जीवन्मुक्तिरपि क्व वा ॥
क्व तद्विदेहकैवल्यं निर्विशेषस्य सर्वदा ॥४॥

क्व प्रारब्धेति। प्रारब्धानि कर्माणि तथा जीवन्मुक्तिस्तथा विदेहकैवल्यमेते धर्माः सदा निर्विशेषस्य मे न संतीत्यर्थः ॥४॥ ॥ ॥

क्व कर्ता क्व च वा भोक्ता निःक्रियं स्फुरणं क्व वा ॥
क्वापरोक्षं फलं वा क्व निःस्वभावस्य मे सदा ॥५॥

क्व कर्तेति। सदा निःस्वभावस्य मे कर्तृत्वभोक्तृत्वनिःक्रियस्फुरणानि क्व अतएवापरोक्षं रतिरूपं च ज्ञानं क्व फलं विषयावच्छिन्नं यत् फलं चैतन्यं क्वेत्यर्थः ॥५॥

क्व लोकः क्व मुमुक्षुर्वा क्व योगी ज्ञानवान् क्व वा ॥
क्व बद्धः क्व च वा मुक्तः स्वस्वरूपेहमद्वये ॥६॥

क्व लोक इति। अहमित्येवं रूपेऽद्वये अहमद्वये आत्माद्वैते स्वस्वरूपे सति लोकः क्व मुमुक्षुः क्व योगी क्व ज्ञानवानपि बद्धः क्व मुक्तः क्वेत्यर्थः ॥६॥

क्व सृष्टिः क्व च संहारः क्व साध्यं क्व च साधनं ॥
क्व साधकः क्व सिद्धिर्वा स्वस्वरूपेहमद्वये ॥७॥

क्व सृष्टिरिति। अहमद्वये आत्माद्वैते स्वस्वरूपे सति सृष्टिसंहारौ साध्यसाधने साधकः सिद्धिर्वा क्व ॥७॥

क्व प्रमाता प्रमाणं वा क्व प्रमेयं क्व च प्रमा ॥
क्व किंचित् क्व न किंचिद्वा सर्वदा विमलस्य मे ॥८॥

क्व प्रमातेति। सर्वदा विमलस्योपाधिसंबंधमलशून्यस्य मे प्रमातृप्रमाणप्रमेयप्रमासंबंधः क्व मम किंचित्सामान्यतोन्यत्पदार्थ

मात्रंक्वनचकिंचिद्वाक्वपदार्थाभावोपिममक्वसर्वथासंबंधशून्य
त्वादित्यर्थः ॥९॥

क्वविक्षेपः क्वचैकाग्र्यंक्वनिर्बोधः क्वमूढता ॥
क्वहर्षः क्वविषादोवासर्वदानिःक्रियस्यमे ॥१०॥

क्वविक्षेपइति। सर्वदानिःक्रियस्यमेविक्षेपादिकाक्रियाक्वेत्यर्थः॥९

क्वचैषव्यवहारोवाक्वचसापरमार्थता ॥
क्वसुखंक्वचवादुःखंनिर्विमर्शस्यमेसदा॥१०॥

क्वचैषइति। सदानिर्विमर्शस्यविशेषतोवृत्तिज्ञानशून्यस्यव्यहारो
व्यावहारिकपदार्थज्ञानंक्वपरमार्थताज्ञानंचक्वसुखदुःखादिकमपि

क्वमायाक्वचसंसारः क्वप्रीतिर्विरतिःक्ववा॥ क्व॥१०॥
क्वजीवःक्वचतद्ब्रह्मसर्वदाविमलस्यमे॥११॥

क्वमायेति। सर्वदाविमलस्यउपाधिमलशून्यस्यमेमायासंसारो
प्रीतिर्विरतिश्चवैराग्यंक्वजीवभावोब्रह्मभावश्चक्वकार्योपाध्यभा
वेजीवत्वस्यवक्तुमशक्यत्वाद्व्याप्यवस्तूनामभावेब्रह्मत्वस्यच
वक्तुमशक्यत्वादित्यर्थः॥११॥

क्वप्रवृत्तिर्निवृत्तिर्वाक्वमुक्तिः क्वचबंधनं ॥
कूटस्थनिर्विभागस्यस्वस्थस्यममसर्वदा॥१२॥

क्वप्रवृत्तिरिति। कूटस्थस्यनिःक्रियस्यतथानिर्विभागस्यभेदर
हितस्यसर्वदास्वस्थस्यममप्रवृत्तिनिवृत्तीक्वमुक्तिबंधनेचक्वेत्यर्थः
॥१२॥

क्वोपदेशः क्ववाशास्त्रंक्वशिष्यःक्वचवागुरुः॥
क्वचास्तिपुरुषार्थोवानिरुपाधेःशिवस्यमे॥१३॥

क्वोपदेशइति। निरुपाधेरुपाधिशून्यस्यतथाशिवस्यनित्यानं
दस्वरूपस्यउपदेशक्रियाक्वउपदेशकंशास्त्रंचक्वमायाद्युपाध्य
भावेतत्कृतोपदेशस्यचाभावात्। अतएवशिष्यःगुरुश्चक्व
स्वयंशिवस्वरूपस्यचपुरुषार्थोवाक्वचास्ति॥१३॥ ॥ ॥

क्वचास्तिक्वचवानास्तिक्वास्तिचैकंक्वचद्वयं ॥
बहुनात्रकिमुक्तेननकिंचिन्नोत्तिष्ठतेमम॥१४॥
इतिश्रीशिष्यप्रोक्तंजीवन्मुक्तचतुर्दशकं ॥ +

जीवन्मुक्तदशामुपसंहरति। क्वचास्तीति। मम अस्तीति न स्फुरति। असत्वापेक्षत्वात् सत्वस्य तथा नास्तीत्यपि न स्फुरति। सत्वापेक्षत्वान्नास्तित्वस्य। अत एव मिथः सापेक्षत्वाच्चैकत्वद्वित्वेपि मनस्तः प्रत्येकंव्यक्तिभेदेन निषेधस्य कल्पकोटिभिरपि वक्तुमशक्यत्वात् सामान्यत आह। बहुनेति। बहुना उक्तेन किं प्रयोजनं ममविदेकरूपस्य किंचिदपि नोत्तिष्ठते न प्रकाशत इत्यर्थः॥ १४॥ इति श्रीमद्विश्वेश्वरविरचितायामष्टावक्रटीकायां शिष्यप्रोक्तं जीवन्मुक्तिचतुर्दशकं विंशतिकं प्रकरणं॥ २०॥

दशषट् चोपदेशे स्युः श्लोकाश्च पंचविंशतिः॥
सत्यात्मानुभवोल्लासे उपदेशे चतुर्दश॥ १॥

विनयेबुद्धिसौकर्यमुद्दिश्य ग्रंथकृत्स्वयं। श्लोकसंख्यां परस्कृत्स्य प्राहानुक्रमणीं स्फुटं॥ १॥ षट्दशषोडश श्लोकाः गुरुणोपदेशे स्युः संति प्रथमप्रकरणे। पंचविंशतिश्लोकाः शिष्योक्तानुभवोल्लासे द्वितीयप्रकरणे स्युः। चतुर्दशश्लोकाः पुनर्गुरुणाक्षेपमुद्रयोक्तोपदेशाख्ये तृतीयप्रकरणे स्युः॥ १॥

षडुल्लासे लये चैवोपदेशे च चतुश्चतुः॥
पंचकं स्यादनुभवे बंधमोक्षे चतुष्ककं॥ २॥

षट् उल्लास इति। षट् श्लोकाः शिष्यप्रोक्तानुभवोल्लासे चतुर्थप्रकरणे स्युश्चत्वारः श्लोका गुरुप्रोक्ते लयाख्ये पंचमे प्रकरणे स्युः। पुनश्चत्वारः श्लोका गुरुप्रोक्ते प्रतिवादिसिद्धलयनिषेधोपदेशाख्ये षष्ठे प्रकरणे स्युः श्लोकानां पंचकं शिष्यप्रोक्ते नुभवाख्ये सप्तमे प्रकरणे स्यात्। श्लोकानां चतुष्कं गुरुप्रोक्ते बंधमोक्षेष्टमे प्रकरणे स्यात्॥ २॥

निर्वेदोपशमे ज्ञाने एवमेवाष्टकं भवेत्॥
यथासुखे सप्तकं च शांतौ स्याद्देदसंमति॥ ३॥

निर्वेदोपशम इति। श्लोकाष्टकं गुरुप्रोक्ते निर्वेदाख्ये नवमे प्रकरणे स्यात्। गुरुप्रोक्तमुपशमाष्टकं नाम दशमं प्रकरणं। गुरुप्रोक्तं ज्ञानाष्टकं नामएकादशं प्रकरणं। शिष्यप्रोक्तमेवमेवाष्टकं नाम

द्वादशंप्रकरणं। शिष्यप्रोक्तंयथासुखसप्तकंनामत्रयोदशंप्रकर
णं शिष्यप्रोक्तंशांतिचतुष्कंनामचतुर्दशंप्रकरणं॥ ३॥ ॥ ॥

तत्वोपदेशेविंशश्च दशज्ञानोपदेशके ॥
तत्वस्वरूपेविंशश्च शमेचशतकं भवेत्॥४॥

तत्वोपदेशइति। विंशतिश्लोकाः गुरुप्रोक्ते तत्वोपदेशाख्ये
पंचदशेप्रकरणेस्युः। दशश्लोकागुरुप्रोक्ते विशेषोपदेशाख्येषो
डशप्रकरणेस्युः। विंशतिश्लोकाः गुरुप्रोक्तास्तत्वस्वरूपोपदे
शाख्येसप्तदशेप्रकरणेस्युः गुरुप्रोक्तंशमशतकंनामाष्टादशंप्रकर
णं॥४॥

अष्टकंचात्मविश्रांतौ जीवन्मुक्तौचतुर्दश॥
षट्संख्याक्रमविज्ञानेग्रंथैकात्म्यंततः परं॥५॥

अष्टकंचेति शिष्यप्रोक्तमात्मविश्रांत्यष्टकंनामएकोनविंश
तिमंप्रकरणं। शिष्यप्रोक्तंजीवन्मुक्तचतुर्दशकंनामविंशतिकं
प्रकरणंगुरुप्रोक्तंसंख्याक्रमकथनंनामैकविंशतिकंप्रकरणं। अ
तः परंविंशत्येकमितैः खंडैः श्लोकैर्ग्रंथैकात्म्यंसंख्यासंख्येयग्रं
थखंडानांचैकात्म्यंसमूहरूपतयैकात्मत्वमित्यर्थः॥५॥ ॥

विंशत्येकमितैः खंडैः श्लोकैरात्माग्निमध्यखैः॥
अवधूतानुभूतेश्च श्लोकाः संख्याक्रमा अमी॥६॥

इत्यष्टावक्रं समाप्तम् ॥ ॥ ॥

विंशत्येकेति ॥ कियद्भिः खंडैः विंशत्येकमितैः एकविंशति
खंडैरित्यर्थः॥ कियद्भिः श्लोकैः आत्माग्निमध्यखैः जीवात्मपरमा
त्मभेदभिन्नाआत्मानौद्वौ अग्निस्त्रयः मध्येखंचमध्ये शून्य मंका
नांवामतोगतिरितिन्यायात् अंतेद्वौमध्यखमादौचत्रयं ३०२
द्व्यधिकैस्त्रिशतश्लोकैरित्यर्थः। श्लोकसंख्यामुपसंहरति। अव
धूतेति। अवधूतानुभूतिःरूपोयंग्रंथस्तस्यसंख्याक्रमोविद्यते
येषु तेसंख्याक्रमाईदृशाः श्लोका अमी कथिताइत्यर्थः इतिश्री
मद्विश्वेश्वर वि०टीकायां संख्याक्रमव्याख्यानंसमाप्तम् ॥ ॥